# वैद्यक-परिभाषा-प्रदी

श्रीमद्गोविन्दसेनसंगृहीतः ।



पण्डितकुलपति

श्रीमज्जीवानन्दविद्यासागरभट्टाचार्य्यात्मजेन

पण्डित श्रीआशुबोध विद्याभूषणभट्टाचार्य्येण

संस्कृतः प्रकाशितश्च ।



कलिकातानगर्य्याम्

गोवर्द्धनयन्त्रे मुद्रितः ।

ई १९०६ ।

आ. २२/७

# परिभाषा-प्रदीपस्य सूचीपत्रम् ।







## द्वितीयः खण्डः।

# परिभाषा-प्रदीपः ।

## प्रथमः खण्डः ।

नमोऽस्तु नीरद-स्वच्छ-वपुषे पीत-वाससे ।
यस्यास्येन्दुसुधां वंशी पपौ शब्दस्वरूपिणी ॥
कृष्णवल्लभसेनस्य तनुजेन वितन्यते ।
श्रीमद्गोविन्दसेनेन परिभाषाप्रदीपकः ॥
पूर्व्वैर्मुनिभिरादिष्टा स्वे स्वे तन्त्रे क्वचित् क्वचित् ।
परिभाषा मया सा सा समाहृत्य विलिख्यते ॥
ध्वान्ते पथि चरिष्णुनां यथा दीपः प्रदर्शकः ।
नानाशास्त्रज्ञभिषजां संग्रहोऽयं तथा भवेत् ॥
खण्डैश्चतुर्भिरादिष्टः संग्रहो नातिविस्तरः ।
वैद्याः कुर्व्वन्त्वत्र यत्नं व्यवहारार्थमुद्यताः ॥
अव्यक्तानुक्तलेशोक्त-सन्दिग्धार्थप्रकाशिकाः ।
परिभाषाः प्रकथ्यन्ते दीपीभूताः सुनिश्चिताः ॥

### अथ प्रथमतो मानसूत्रं लिख्यते ।

परिमाणं विना क्वापि नागदाज्जायते फलम् ॥
तस्मात् सर्व्वे यतन्तेऽत्र परिमाणविधौ सदा ।

शार्ङ्गधरस्त्वाह ।

न मानेन विना युक्तिर्द्रव्याणां जायते क्वचित् ।
अतः प्रयोगकार्य्यार्थं मानमत्रोच्यते मया ॥

अन्यच्च ।

मानापेक्षितमाचार्य्या भेषजानां प्रकल्पनम् ।
मेनिरे यत्ततो मानमुच्यते पारिभाषिकम् ॥ इति ॥
तत्तु ( मानं ) मतभेदान्नानाविधं भवति ।

## अथ कालिङ्गपरिभाषा ॥

जालान्तरगतैः सूर्य्यकरैः ध्वंसी (१) विलोक्यते ।
षड्ध्वंसीभिर्मरीचिः स्यात् ताभिः षड्भिश्च राजिका ॥
तिसृभीराजिकाभिश्च सर्षपः प्रोच्यते बुधैः ।
यवोऽष्टसर्षपैः प्रोक्तो गुञ्जा स्यात्तच्चतुष्टयम् ॥
षड्भिश्च रक्तिकाभिः स्यान्माषको हेमधामकौ (२) ॥
माषैश्चतुर्भिः शाणः स्याद्धरणं तन्निगद्यते ॥
टङ्कः स एव कथितस्तद्द्वयं कोल उच्यते ।
क्षुद्रो मोटरक(३)श्चैव द्रङ्क्षणं तन्निगद्यते (४) ॥
कोलद्वयञ्च कर्षः स्यात् स प्रोक्तः पाणिमानिकः ।
अक्षः पिचुः पाणितलं किञ्चित् पाणिश्च तिन्दुकम् ॥
विड़ालपदकञ्चैव तथा षोड़शिका मता ।
करमध्यो हंसपदं सुवर्णं कवलग्रहः (५) ॥
उडुम्बरञ्च पर्य्यायैः कर्ष एव निगद्यते ।
स्यात् कर्षाभ्यामर्द्धपलं शुक्तिरष्टमिका तथा ॥

---

(१) सर्वत्र ध्वंसीस्थाने "वंशी" इति वा पाठान्तरम् ।
(२) अत्र "हेमधान्यकौ" इति पाठान्तरम् ।
(३) मोटरकः इत्यत्र मोरटकः इति पाठान्तरम् ।
(४) अत्र "क्षुद्रको वटकश्चैव वंक्षणः स निगद्यते" इति वा पाठान्तरम् ।
(५) डलयोरलयोर्व्यत्ययबहुलमिति केचित् "कवड़ग्रहः" इत्यपि पठन्ति ।

शुक्तिभ्याञ्च पलं ज्ञेयं मुष्टिमात्रञ्चतुर्थिका (१) ।
प्रकुञ्चः षोड़शी विल्वं पलमेवात्र कीर्त्यते ॥
पलाभ्यां प्रसृतिर्ज्ञेया प्रसृतञ्च निगद्यते ।
प्रसृतिभ्यामञ्जलिः स्यात् कुड़वोऽर्द्धशरावकः ॥
अष्टमानञ्च स ज्ञेयः कुड़वाभ्याञ्च मानिका ।
शरावोऽष्टपलं तद्वज्ज्ञेयमत्र विचक्षणैः ॥
शरावाभ्यां भवेत् प्रस्थश्चतुःप्रस्थैस्तथाढ़कम् ।
भाजनं कंस-पात्रे च (२) चतुःषष्टिपलञ्च तत् ॥
चतुर्भिराढ़कैर्द्रोणः कलशो नल्वणोऽर्म्मनः ।
उन्मानञ्च घटो राशिर्द्रोणपर्य्यायसंज्ञितः ॥
द्रोणाभ्यां सूर्पकुम्भौ च चतुःषष्टिशरावकः ।
सूर्पाभ्याञ्च भवेद्द्रोणी वृहत् द्रोणी (३) च सा स्मृता ।
द्रोणीचतुष्टयं खारी कथिता सूक्ष्मबुद्धिभिः ।
चतुःसहस्रपलिका षसवत्यधिका च सा ॥
पलानां द्विसहस्रञ्च भार एकः प्रकीर्त्तितः ।
तुला पलशतं ज्ञेयं सर्वत्रैवैष निश्चयः ॥
माष-टङ्काक्ष-विल्वानि कुड़वः प्रस्थ आढ़कम् ।
राशिर्द्रोणी खारी चेति यथोत्तरं चतुर्गुणाः ॥
गुञ्जादिमानमारभ्य यावत् स्यात् कुड़वस्थितिः ।
द्रवार्द्र शुष्कद्रव्याणां तावन्मानं समं मतम् ॥
प्रस्थादिमानमारभ्य द्विगुणं तद्द्रवार्द्रयोः ।
मानं तथा तुलायाश्च द्विगुणं न क्वचित् स्मृतम् ॥

---

(१) अत्र "मुष्टिराद्यं चतुर्थिका" इति पाठान्तरम् ।

(२) अत्र "कांसपात्रञ्च" इति पाठान्तरम् ।

(३) अत्र "वाही गोणी" इति पाठान्तरम् ।

मृद्वृक्ष-वेणु-लोहादेर्भाण्डं यच्चतुरङ्गुलम् (१) ।
विस्तीर्णञ्च तथोच्चञ्च तन्मानं कुड़वं वदेत् ॥
यदौषधन्तु प्रथमं यस्य योगस्य कथ्यते ।
तन्नाम्नैव स योगो हि कथ्यते तत्र निश्चयः ॥

इति कालिङ्गपरिभाषा ।

## अथ मागधिपरिभाषा ।

त्रसरेणुस्तु विज्ञेयः त्रिंशता परमाणुभिः ।
त्रसरेणुस्तु पर्य्यायनाम्ना ध्वंसी निगद्यते ॥
षड़्ध्वंसीभिर्मरीचिः स्यात् षण्मरीच्यस्तु सर्षपः ।
षट्सर्षपैर्यवस्त्वेको गुञ्जैका च यवैस्त्रिभिः ॥
गुञ्जाभिर्दशभिः प्रोक्तो माषको ब्रह्मणा पुरा ।
हेमश्च धामकश्चैव पर्य्यायस्तस्य कीर्त्तितः ॥
चतुर्भिर्माषकैः शाणः स निष्काष्टक एव च ।
धरणशब्दोऽत्र बोध्यः अन्यत्र शाणपर्य्याये लिखितत्वात् ।
शाणौ द्वौ द्रङ्क्षणं विद्यात् कोलं वटकमेव च ॥
कर्षार्द्धं द्विगुणं कर्षं सुवर्णञ्चाक्षमेव च ।
किञ्चिद्विड़ालपदकं पिचुः पाणितलं तथा ॥
उडुम्बरं तिन्दुकञ्च कवड़ग्रहमेव च ।
द्वे सुवर्णे पलार्द्धं स्यात् शुक्तिरष्टमिका तथा ॥
द्वे पलार्द्धे पलं मुष्टिः प्रकुञ्चश्च चतुर्थिका ।
विल्वं षोड़शिकाम्रञ्च द्वे पले प्रसृतं विदुः ॥
कुड़वः प्रसृताभ्यां स्यादञ्जलिः स निगद्यते ।
अष्टमानं शरावार्द्धं तस्य पर्य्यायमेव च ॥

(१) लोहमष्टविधं तच्च सुवर्ण-रजत-ताम्रार-घोष-त्रपु-सीसक-लोहान्तम् । तत्रादि ग्रहणाच्चर्मशृङ्गदन्ता अपि गृह्यन्ते ।

कुड़वाभ्यां माणिका स्यात् शरावोऽष्टपलं तथा ।
माणिकाभ्यां भवेत् प्रस्थो ज्ञेयः षोड़शभिः पलैः ॥
चतुःप्रस्थैराढ़कः स्यात् पात्रं कंसञ्च भाजनम् ।
अयं भिषग्भिराख्यातश्चतुःषष्टिपलैरिह ॥
चतुर्भिराढ़कैर्द्रोणः कथितः पूर्व्वसूरिभिः ।
घटः कलश उन्मानो नल्वणोऽर्मन एव च ॥
द्रोणपर्य्यायनामानि कीर्त्तितानि भिषग्वरैः ।
अयञ्च पलसंख्यातः षट्पञ्चाशच्छतद्वयम् ॥
द्रोणाभ्यां सूर्पकुम्भौ च चतुःषष्टिशरावकः ।
सूर्पाभ्याञ्च भवेद्द्रोणी वृहद्द्रोणी च सा स्मृता ॥
द्रोणीचतुष्टयं खारी कथिता सूक्ष्मबुद्धिभिः ।
चतुःसहस्रपलिका षण्णवत्यधिका च सा ॥
तुला पलशतं प्रोक्तं भारः स्याद्विंशतिस्तुला: ।
पलानां द्विसहस्राणि भारः परिमितो बुधैः ॥
माषकः शाणतिन्दूके पलं कुड़वप्रस्थकः ।
राशिर्द्रोणी खारी चेति यथोत्तरं चतुर्गुणाः ॥
शुष्कद्रव्येष्विदं मानं द्विगुणञ्च द्रवार्द्रयोः ।
ज्ञातव्यं कुड़वादूर्द्ध्वं प्रस्थादिश्रुतिमानतः ॥

अत्र कुड़वादूर्द्ध्वमित्युक्तौ शरावस्य द्वैगुण्यं स्यादित्यत आह । प्रस्थादिश्रुतिमानत इति, प्रस्थादिमानमारभ्य इत्यर्थः । कुड़वे किं द्वैगुण्यं नेत्यत आह कुड़वादूर्द्ध्वमिति । अयमभिसन्धिः कुड़वादत्र ल्यब्लोपे पञ्चमी कुड़वं व्याप्येत्यर्थः केचिदत्र व्याचक्षते । तन्मते कुड़वस्यापि द्वैगुण्यम् ।

कुड़ादिति दिग्योगलक्षणां पञ्चमीं ये वदन्ति, तन्मते कुड़वे द्वैगुण्यं नास्तीति ।

यथा—गुञ्जादिमानमारभ्य यावत् स्यात् कुड़वस्थितिः ।

द्रवार्द्र शुष्कद्रव्येषु तुल्यं मानं प्रकीर्त्तितम् ॥

इति वचनात्।

अस्यार्थः। रक्तिकादिमारभ्य कुड़वादर्व्वाक् तुल्यं मानम्। कुड़वमारभ्य द्वैगुण्यं एतेन कुड़वस्यापि द्वैगुण्यं निश्चलकरेणैव व्याख्यातम्।

अतएवोक्तम्।

सर्पिःखण्डजलक्षौद्र-तैलक्षीरासवादिषु।
अष्टौ पलानि कुड़वो नारिकेले च शस्यते ॥
अनित्या परिभाषेयं यथा दर्शनमुच्यते।
दन्तीघृते कुङ्कुमाद्ये तैलेऽसावुपयुज्यते ॥
न नारिकेले खण्डे च न तैले पलमिष्यते।

तथाच—

कुड़वेऽपि क्वचित् द्वित्वं यथा दन्तीघृते स्मृतम्। इति।

अनेनापि निःसन्देहो न प्रतिपाद्यत इति। यतो दन्तीघृत-मात्रे द्वैगुण्यमस्ति, न सर्व्वत्र, कण्ठोक्त्या क्वचिदिति पाठात्। अतोच्यते कुड़वे माणिकायां तुलायां पलमाने च द्वैगुण्यं नास्तीति।

यथाः—कुड़वे माणिकायाञ्च तुलामाने तथैव च।
पलोल्लेखागते माने न द्वैगुण्यमिहेष्यत ॥ इति।

अतएव कुड़वस्य न द्वैगुण्यं, किन्तु निश्चलकरव्याख्या—दन्तीघृत एव, नान्यत्रेति संक्षेपः।

शुष्कद्रव्ये तु या मात्रा चार्द्रस्य द्विगुणा हि सा। जलपत्वात्
शुष्कस्य गुरुतीक्ष्णत्वात् तस्मादर्द्धं प्रकीर्त्तितम् ॥

अस्यापवादमाह।

अडूसा देवदारु कौटी केवड़ा कमलिनी शतावरी वा
वासा-निम्ब पटोल-केतकि-बला-कुष्माण्डकेन्दीवरी।
पुनर्नवा वर्षाभू-कुटजाश्वगन्धसहितास्ताः पूतिगन्धामृताः ॥ गुडूची

वांसा गुग्गुलुः
मांसं नागवला सहाचरपुरौ हिङ्ग्वार्द्रके नित्यशः ।
ग्राह्यास्तत्क्षणमेव न द्विगुणिता ये चेक्षुजातागणाः ॥

घना इति वा पाठः । अत्र इन्दीवरी शतावरी, पूतिगन्धा प्रसारणी । सहाचरः पीतझिण्टी इक्षुजाता गुड़ादयः ॥ गणाः भद्रदार्वादिसालसारादि दशमूली प्रभृतयः । घना इति पाठे घनाः कठिनाः ॥

अन्यच्च ॥

गुडूची कुटजो वासा कुष्माण्डश्च शतावरी ।
अश्वगन्धासहचरी शतपुष्पा प्रसारणी ॥
प्रयोक्तव्याः सदैवार्द्रा द्विगुणं न च कारयेत् ॥

शार्ङ्गधरमतमेतत् ॥

अन्यच्च ॥

वासा-कुटज-कुष्माण्ड-शतपुष्पासहामृता ।
प्रसारण्यऽश्वगन्धा च नागाख्यातिवलावला: ॥
नित्यमार्द्रा प्रयोक्तव्या न तासां द्विगुणो भवेत् ॥
हस्तिकर्ण-पलाश-वाष्यालक-गोरक्षतण्डुलाश्चैतत् ।

## अथ द्रव्याणामुपयुक्तानुपयुक्तत्वमाह ।

शुष्कं नवीनं द्रव्यञ्च योज्यं सकलकर्म्मसु ।
आर्द्रञ्च द्विगुणं विद्यादेष सर्व्वत्र निश्चयः ॥

अन्यच्च ।

द्रव्याण्यभिनवान्येव प्रशस्तानि क्रियाविधौ ।
ऋते घृत-गुड़-क्षौद्र-धान्य-कृष्णा-विड़ङ्गतः ॥

## प्रसङ्गात् स्नेहादेर्गुणागुणमाह ।

स्नेहः सिद्धो गुड़ादिश्च गुणहीनोऽब्दतो भवेत् ।
स्नेहाद्याः पूर्णवीर्य्याः स्युराचतुर्मासतः परम् ॥

अब्दादूर्द्धं घृतं पक्वं हीनवीर्य्यन्तु तद्भवेत् ।
तैले विपर्ययं विद्यात् पक्वेऽपक्वे विशेषत: ॥
तैलमत्र तिलभवं न सर्षपादिस्नेहसामान्यपरम् ।

अन्यच्च ॥

गुणहीनं भवेत् वर्षादूर्द्धं तद्रूपमौषधम् ।
मासद्वयात् तथा चूर्णं हीनवीर्य्यत्वमाप्नुयात् ॥
Pills हीनत्वं गुडिकालेहौ लभेते वत्सरात् परम् ।
हीना: स्युर्घृततैलाद्याश्चतुर्मासाधिकात् तथा ॥
ओषध्यो लघुपाका: स्युर्निर्वीर्य्या वत्सरात् परम् ।
पुराणा:स्युर्गुणैर्युक्ता आसवा धातवो रसा: ॥

हीना: स्युर्घृततैलाद्या इति तैलमत्र कटुतैलम् । तन्निष्पादित दशमूल तैलादि च ज्ञेयं, नान्यत् ।

"अब्दादूर्द्धं घृतं पक्वं हीनवीर्य्यत्वमाप्नुयात् ।
तैले विपर्य्ययं विद्यात् पक्वेऽपक्वेविशेषत: ॥" इति वचनात् ।
व्याधेरयुक्तं यद्द्रव्यं गणोक्तमपि तत्त्यजेत् ।
अनुक्तमपि युक्तं यद्योजयेत् तत्र तद्बुध: ॥

शार्ङ्गधरेनैवोक्तम् ।

## अथ प्रशस्तदेशज द्रव्यमाह ।

आग्नेया विन्ध्यशैलाद्या: सौम्यो हिमगिरिर्मत: ।
ततस्तान्यौषधानि स्यु: प्रशस्तानि क्रियाविधौ ॥
अन्येष्वपि प्ररोहन्ति वनेषूपवनेषु च ।
गृह्णीयात्तान्यपि भिषग् वने शैले विशेषत: ॥

अन्येऽप्याहु: ।

धन्वसाधारणे वापि गृह्णीयादुत्तराश्रितम् ।
पूर्व्वाश्रितं वा मतिमानौषधं तद्विचक्षण: ॥

अन्यच्च ।

धन्वसाधारणे देशे मृदावुत्तरतः शुचौ ।
अवैकृतमनाक्रान्तं सवीर्य्यं ग्राह्यमौषधम् ॥

"धन्वः देशविशेषः" मरुभूमिजाङ्गलयोः संसृष्टलक्षणो देश इति ।

## अथ निषेधमाह ।

देवतालयवल्मीक-कूपरथ्याश्मशानजाः ।
अकालतरुमूलोत्था न्यूनाधिकचिरन्तनाः ॥
जलाग्निकृमिसंक्षुस्रा ओषध्यस्तु न सिद्धिदाः ॥

अन्यच्च ।

वल्मीक-कुत्सितानूप-श्मशानोषर-मार्गजाः ।
जन्तु-वह्नि-हिमव्याप्ता नौषध्यः कार्य्यसाधिकाः ॥

## अथ भूतापसारणः ।

ओं निवसन्ति हि भूतानि यान्यस्मिन् कानिचिद् द्रुमे ।
अपक्रामन्त्वतस्तानि प्रजार्थं पाठ्यते द्रुमः ॥
ओं वेतालाश्च पिशाचाश्च राक्षसाश्च सरीसृपाः ।
ये भूतास्तेऽपसर्पन्तु वृक्षादस्मात् शिवाज्ञया ॥

## अथोद्धारणमन्त्रः ।

ओं येन त्वां खनते ब्रह्मा येनेन्द्रो येन केशवः ।
तेनाहं त्वां खनिष्यामि मन्त्रपूतेन पाणिना ॥
भूतादिमुक्तयेऽभ्यर्च्चश सायं प्रातरुदङ्मुखैः ।
आर्द्रैरुपोषितैर्ग्राह्यं भेषजं कर्म्मकृद्भवेत् ॥

## अथ औषधद्रव्याङ्गग्रहणमाह ।

सारः स्यात् खदिरादीनां निम्बादीनाञ्च वल्कलम् ।
फलन्तु दाड़िमादीनां पटोलादेश्छदस्तथा ॥

शार्ङ्गधरस्त्वाह ।

न्यग्रोधादेस्त्वचो ग्राह्याः सारः स्याद्बीजकादितः ।
तालीशादेश्च पत्राणि फलं स्यात् त्रिफलादितः ॥

न्यग्रोधः वटः ।

अन्यच्च ॥

महान्ति यानि मूलानि काष्ठगर्भाणि यानि च ।
तेषान्तु वल्कलं ग्राह्यं ह्रस्वमूलानि कृत्स्नशः ॥

अन्यच्च ।

अतिस्थूलजटा याश्च तासां ग्राह्यास्त्वचो ध्रुवम् ।
गृह्णीयात् सूक्ष्ममूलानि सकलान्यपि बुद्धिमान् ॥
निर्द्देशः श्रुयते तन्त्रे द्रव्यानां यत्र यादृशः ।
तादृशः संविधातव्यः शास्त्राभावे प्रसिद्धितः ॥

अस्यार्थः ।

यत्र यत्र द्रव्येषु अङ्गानामवयवानां यादृशो निर्द्देशः श्रूयते, तादृश एव ग्राह्यः । यथा अमृतादिपाचने अमृतवृषपटोलं निम्बपत्रमित्यत्रपत्रमेव ग्राह्यम्, न वल्कलं, पत्रस्य कण्ठोक्तत्वात् । अङ्गसामान्योक्तौ मूलस्य वल्कलेनैव व्यवहार इति गुरवः । "अङ्गेऽप्यनुक्ते विहितन्तु मूलम्" इति वचनात् ।

व्याधिप्रशमने पूर्व्वं ज्ञापितानि पृथग्जने ॥
विस्फारितान्यौषधानि पश्चाद्राजनि योजयेत् ।

पृथग्जने इति जनान्तरे । विस्फारितानि विशेषेण स्फूर्त्तानि ॥

तद्यथा—गोपाल-तापस-व्याध-मालाकार-वने-चरान् ।
पृष्ट्वा नामानि जानीयाद् भेषजानाञ्च शास्त्रतः ।

## विषयभेदे द्रव्यग्रहणम् ।

शरद्यखिलकर्म्मार्थं ग्राह्यं सरसमौषधम् ।
विरेकवमनार्थञ्च वसन्तान्ते समाहरेत् ॥

## अथ ऋतुभेदे द्रव्याङ्गग्रहणमाह ।

मूलानि शिशिरे ग्रीष्मे पत्रं वर्षावसन्तयोः ।
त्वक्कन्दौ शरदि चीरं यथर्त्तु कुसुमं फलम् ॥
हेमन्ते सारमौषध्या गृह्णीयात् कुशलो भिषक् ।

अस्यार्थः ।—यथेति यस्मिन् ऋतौ यद्‌यत् पुष्पं फलञ्च भवति, तस्मिन्नेव तत्तद्‌ग्राह्यमित्यर्थः ।

## अथ सामान्योक्तौ द्रव्यग्रहणमाह ।

पात्रोक्तौ चापि मृत्पात्रमुत्पले नीलमुत्पलम्
शकृद्रसे गोमयरसश्चन्दने रक्तचन्दनम् ॥
सिद्धार्थः सर्षपे ग्राह्यो लवणे सैन्धवं मतम् ।
मूत्रे गोमूत्रमादेयं विशेषो यत्र नेरितः ॥
पयः सर्पिः प्रयोगेषु गव्यमेव प्रशस्यते ।
स्त्रियश्चतुष्पदे ग्राह्याः पुमांसो विहगेषु च ॥
जाङ्गलानां वयस्थानां चर्म्मरोमनखादिकम् ।
हित्वा ग्राह्यं पूतमांसं सास्थिकं खण्डशः कृतम् ॥
पक्तव्यमाजमांसञ्च विधिना घृततैलयोः ।
हित्वा स्त्रीं पुरुषञ्चापि क्लीवं तत्रापि दापयेत् ॥
वलिनञ्च वयःस्थञ्च सुवीर्य्यञ्च सुदेहिनम् ।
न वृद्धञ्च न बालञ्च अवीर्य्यं स्रावशोणितम् (१) ॥

एतद्धेतुगर्भविशेषणम् । असन्धिस्तु छान्दसः । अथवा न वीर्य्यमवीर्य्यम् अल्पार्थे नञ् । तेनाल्पशुक्रम् । अतएव काशीराजाभिप्रायेन नपुंसकस्य विधिना सूचितमेव, शरीरारम्भकत्वादल्पवीर्य्यत्वं वीर्य्यमस्त्येव इत्यर्थः । अतः स्रावशोणितायाः

(१) नस्रवद्वीजशोणितमिति पाठान्तरम् ।

छाग्यास्त्वनुपयोगित्वम्, अर्थादस्रावशोणिताया ग्राह्या इत्यर्थः। स्त्रीप्रकृत्या बन्ध्याछाग्या अस्रावशोणितत्वमस्त्येव, तस्माद्बन्ध्या छाग्यपि योज्या इति नपुंसकाभावादनुशासनात्।

मृगालबर्हिणोः पाके पुमांसं तत्र दापयेत्।
मयूरी जम्बुकी छागी वीर्य्यहीना स्वभावतः॥
काशीराजमतेनैव छागमेव नपुंसकम्।
अभावादप्रतिच्छाद्वा वृद्धवैद्योपदेशतः॥
बन्ध्या छागी विपन्नाव्या न तु शास्त्रमतं चरेत्।

अभावात् इति नपुंसकस्य अलाभात्। अथवा नपुंसकस्य वीर्य्याभावात्, वीर्य्यमस्ति न वेति काकदन्तवत्। अप्रतीच्छाद्वा शास्त्रमिति शासनम् आज्ञा, काशीराजमते नैवेत्यादि रूपेण। केचित्तु कृत्रिमनपुंसकमपि ददति। तदसत्। स तु प्रकृत्या च पुरुष एव। ननु बन्ध्याया नपुंसकस्य च छागस्य अपत्यजनकत्वं नास्ति, तत्कथमपत्यकामिनः प्रवर्त्तन्ते छागलादिघृतादिषु कदाचित् क्रियासिद्धेरभावः स्यादतश्चिन्त्यम्।

स्त्रीणां मूत्रं गवां तीक्ष्णं न तु पुंसां विधीयते॥
पित्तात्मिकाः स्त्रियो यस्मात् सौम्यास्तु पुरुषा मताः॥
क्षीरमूत्रपुरीषाणि जीर्णाहारे तु संहरेत्।

## अथानुक्तौ द्रव्यग्रहणम्।

कालेऽनुक्ते प्रभातं स्यादङ्गेऽनुक्ते जटा भवेत्।
भागेऽनुक्ते तु साम्यं स्यात् पात्रेऽनुक्ते तु मृण्मयम्॥
द्रवेऽनुक्ते जलं विद्यात् सर्व्वत्रैष विनिश्चयः।

## अथाभावे द्रव्यग्रहणम्।

मधु यत्र न विद्येत तत्र जीर्णो गुड़ो मतः।
पुरातनगुड़ाभावे रौद्रे यामचतुष्टयम्॥

संशुष्य नूतनं ग्राह्यं पुरातनगुडेऽपि वा ।
चौराभावे भवेन्मौद्गो रसो मासूर एव वा ॥
सिताभावे च खण्डः स्यात् शाल्यभावे च षष्टिकः ।
असम्भवे च द्राक्षाया गाम्भारीफलमिष्यते ॥
न भवेद्दाड़िमो यत्र वृक्षाम्लं तत्र दापयेत् ।
सौराष्ट्र्यभावे च ग्राह्या पङ्कस्य पर्पटी ॥
मतं तगरमूलं स्यादभावे मोकलीजटा ।
प्रयोगे यत्र लौहः स्यादभावे तन्मलं विदुः ॥
सर्षपः शुक्लवर्णो यः स हि सिद्धार्थ उच्यते ।
तत्र सिद्धार्थकाभावे सामान्यः सर्षपो मतः ॥
चविकागजपिप्पल्योः पिप्पलीमूलमेव च ।
अभावे पिप्पलीमूलं हस्तिपिप्पलीचव्ययोः ॥
पाठान्तरमेतत् न पुनरुक्तदोषम् ।
अभावे पृश्निपर्ण्याश्च सिंहपुच्छी विधीयते ॥
सिंहपुच्छी शालपर्णी ।
नित्यं मुञ्जतिकाभावे तालमस्तकमिष्यते ।
तालसदृशवृक्षः, स च देशान्तरे ख्यातः । माञ्जुफलमिति केचित् ।
कुङ्कुमस्याप्यभावेऽपि निशा ग्राह्या भिषग्वरैः ॥
मुक्ताभावे शङ्खचूर्णं वज्राभावे वराटिका ।
कर्कटशृङ्गकाभावे मायाम्बु चेष्यते बुधैः ॥ (१)
धान्यकाभावतो दद्यात् शतपुष्पां भिषग्वरः ॥
वाराहीकन्दकाभावे चर्मकारालुको मतः ।
मूर्व्वाभावे त्वचो ग्राह्या जिङ्गिन्या ब्रुवते सदा ॥

(१) कर्कटशृङ्गिकाभावे मायाम्बुबीजमिष्यते । इति पाठान्तरम् ।

अभावात् पौष्करे मूले कुष्ठं सर्वत्र गृह्यते।
सामुद्रं सैन्धवाभावे विड़ं वा गृह्यते बुधैः॥
कुस्तुम्बुरु न विद्येत यत्र तत्र च धान्यकम्।
पुष्पाभावे फलञ्चामं विड़्भेदे विल्वतः फलम्॥ (१)
भल्लातकासहत्वेऽपि रक्तचन्दनमिष्यते।
भल्लाताभावतश्चित्रं नलश्चेचोरभावतः॥
मद्याभावे च शिण्डाकी शुक्ताभावे च काञ्जिकम्॥ (२)
यत्र यद्द्रव्यमप्राप्तं भेषजे परपूर्वतः।
ग्राह्यं तद्गुणसाम्यात् तु न तत्र क्वापि दूषणम्॥
अन्यानि यानीह रसायनादौ योगे च वस्तूनि च कीर्त्तितानि।
तेषामलाभेन च वृद्धवैद्य-प्रसिद्धितस्तानि हरन्ति वैद्याः॥
यष्ट्याह्वाभावतो विद्याच्चव्यं तस्याप्यभावतः।
मूलं पौपल्लिकं देयमभावे कुटजस्य च॥
रास्नाभावे च वन्दाकं जीरभावे च धान्यकम्।
तुम्बुरूणामभावेऽपि मालिधान्यं प्रकीर्त्तितम्॥
रसाञ्जनस्य चाप्राप्तौ दार्व्वीक्वाथं प्रयोजयेत्।
कर्पूरस्याप्यभावेऽपि सुगन्धं मुस्तमिष्यते॥
कस्तूरीणामभावे तु ग्राह्या गन्धशटी बुधैः।
अभावे कोकिलाचस्य गोक्षुरबीजमिष्यते॥
ऋद्धग्रभावे बला ग्राह्या वृद्धग्रभावे महाबला।
मेदाभावे चाश्वगन्धा महामेदे तु शारिवा॥
जीवकर्षभकाभावे गुडूची-वंशलोचने।
काकोली-युगलाभावे निक्षिपेच्च शतावरीम्॥

---

(१) शुक्तभावे तु काञ्जिकमिति वा पाठान्तरम्।
(२) काम्यभावे नपुंसकमिति वा पाठः।

चित्रकाभावतो दन्तीचारः शिखरिजोऽथवा । अपामार्गः
अभावे धन्वयासस्य प्रक्षेप्या तु दुरालभा ॥ जवासा
अहिंस्राया अभावे तु मानकन्दः प्रकीर्त्तितः ।
लक्षणाया अभावे तु नीलकण्ठ-शिखा मता ॥
बकुलाभावतो देयं कह्लारोत्पल-पङ्कजम् ।
नीलोत्पलस्याभावे तु कुमुदं देयमिष्यते ॥ श्वेत कमल
जातीपुष्पं न यत्रास्ति लवङ्गं तत्र दीयते । चमेली
अर्कपर्णादि-पयसोऽप्यभावे तद्रसो मतः ॥
पौष्कराभावतः कुष्ठं तथा लाङ्गल्यभावतः । कलिहारी
स्थौणेयकस्याभावे तु भिषग्भिर्दीयते गदः ॥ कुष्ठ
कुङ्कुमाभावतो दद्यात् कुसुम्भकुसुमं नवम् ।
श्रीखण्डचन्दनाभावे कर्पूरं देयमिष्यते ॥
अभावे त्वेतयोर्वैद्यः प्रक्षिपेद्रक्तचन्दनम् ।
रक्तचन्दनकाभावे नवोशीरं विदुर्बुधाः ॥ खस.
मुस्ता चातिविषाभावे शिवाभावे शिवा मता । अतीस
अभावे नागपुष्पस्य पद्मकेशरमिष्यते ॥
मेदाजीवककाकोली ऋद्धिद्वन्द्वेऽपि वासति । अभावे
वरी विदार्य्यश्वगन्धा वाराही च क्रमात् क्षिपेत् ॥
सुवर्णाभावतः स्वर्णमाक्षिकं प्रक्षिपेद् बुधः । सोनामक्खी
श्वेतं तु माक्षिकं ज्ञेयं बुधै रजतवद् ध्रुवम् ॥ रूपामक्खी
माक्षिकस्याप्यभावे तु प्रदद्यात् स्वर्णगैरिकम् । सोना गेरु
सुवर्णमथवा रौप्यं मृतं यत्र न लभ्यते ।
तत्र कान्तेन कर्म्माणि भिषक् कुर्य्याद्विचक्षणः ॥
कान्ताभावे तीक्ष्णलौहं योजयेद्वैद्यसत्तमः ।
मत्स्यण्डाभावतो दद्युर्भिषजः सितशर्कराम् ॥ सफेद खांड.
असम्भवे सितायास्तु बुधैः खण्डं प्रयुज्यते ।

सौराष्ट्रभावतो देया स्फटिका तद्गुणा जनैः ।
तालीश-पत्रकाभावे स्वर्णताली प्रशस्यते ॥
भार्ग्यभावे तु तालीशं कण्टकारीजटाथवा ।
रुचकाभावतो दद्यात् लवणं पांशुपूर्वकम् ॥
अभावे मधुयष्ट्यास्तु धातकीं प्रयोजयेत् ।
अम्लवेतसकाभावे चुक्रं दातव्यमिष्यते ।
द्राक्षा यदि न लभ्येत प्रदेयं काश्मरीफलम् ॥
तयोरभावे कुसुमं बन्धूकस्य मतं बुधैः ।
लवङ्गकुसुमं देयं नखस्याभावतः पुनः ॥
कस्तूर्य्यभावे कक्कोलं क्षपनीयं विदुर्बुधाः ।
कक्कोलस्याप्यभावे तु जातीपुष्पं प्रदीयते ॥
सुगन्धि मुस्तकं देयं कर्पूराभावतो बुधैः ।
कर्पूराभावतो देयं ग्रन्थिपर्णं विशेषतः ॥
यदि न स्याद् दारुनिशा तदा देया निशा बुधैः ।
अन्तःसम्मार्ज्जने ज्ञेया ह्यजमोदा यमानिका ।
वहिःसम्मार्ज्जने सैव विज्ञातव्याजमोदिका ॥
योगे यदप्रधानं स्यात् तस्य प्रतिनिधिर्मतः ।
यत्तु प्रधानं तस्यापि सदृशं नैव गृह्यते ॥

इति परिभाषाप्रदीपसंग्रहे प्रथमः खण्डः ॥

## द्वितीयः खण्डः ।

### पञ्चविधकषायमाह ।

स्वो रसः स्वरसः प्रोक्तः कल्को दृषदि पेषितः ।
कथितस्तु शृतः शीतः शर्वरीमुषितो मतः ॥

क्षिप्तोष्णतोये मृदितः फाण्ट इत्यभिधीयते।
पञ्चैतास्तु समुद्दिष्टाः कषायाणां प्रकल्पनाः।
गुरवः स्युर्यथापूर्वं लघवः स्युर्यथोत्तरम्॥
विश्वामित्रेण शीतफाण्टयोर्लक्षणमुक्तम्।

तद्यथा।

षड्भिः पलैश्चतुर्भिर्वा सलिलात् शीतफाण्टयोः।
आप्लुतं भेषजपलं रसाख्यायां पलद्वयम्॥

अन्येऽप्याहुः।

अथ स्वरसकल्कौ तु शृतश्च शीतफाण्टकौ।
ज्ञेयाः कषायाः पञ्चैते गुरवः पूर्वपूर्वतः॥

## स्वरसमाह।

सद्यः क्षुण्णाद्र द्रव्यस्य वस्त्रयन्त्रादिपीड़नात्।
यो रसस्त्वभिनिर्य्याति स्वरसः स प्रकीर्त्तितः॥
शुष्कद्रव्यमुपादाय स्वरसानामसम्भवे।
वारिण्यष्टगुणे साध्यं ग्राह्यं पादावशेषितम्॥

अन्यच्च।

आदाय शुष्कं द्रव्यं वा स्वरसानामसम्भवे।
जलेऽष्टगुणिते साध्यं पादशिष्टन्तु गृह्यते॥

अन्यच्च।

आहृत्य तत्क्षणाकृष्टात् क्षुण्णाद् द्रव्यात् समुद्धरेत्।
वस्त्रनिष्पीड़ितो यस्तु स्वरसो रस उच्यते॥
कुड़वं चूर्णितं द्रव्यं क्षिप्तं तद् द्विगुणे जले।
अहोरात्रं स्थितं तस्मात् भवेद्वा रस उत्तमः॥

## अस्य पानमात्रामाह ।

स्वरसस्य गुरुत्वाच्च पलमर्द्धं प्रयोजयेत् ।
निशोषितश्चाग्निसिद्धं (१) पलमात्रं रसं पिबेत् ॥

## स्वरसभेदात् पुटपाकविधिमाह ।

पुटे पक्वस्य द्रव्यस्य स्वरसो गृह्यते यतः ।
अतोऽयं पुटपाकः स्याद् विधानं तस्य कथ्यते ॥
द्रव्यमापोथितं जम्बू-वटपत्रादिसम्पुटे ।
वेष्टयित्वा ततो बद्धा दृढं रज्ज्वादिना तथा ॥
मृल्लेपं द्व्यङ्गुलं कुर्य्यादथवाङ्गुलिमात्रकम् ।
दहेत् पुटान्तरादग्नौ यावल्लेपस्य रक्तता ॥

अन्यच्च ।

पुटपक्वस्य कल्कस्य स्वरसो गृह्यते यतः ।
अतस्तु पुटपाकानां युक्तिरत्रोच्यते मया ॥
पुटपाकस्य मात्रेयं लेपस्यारुणवर्णता ।
लेपश्च द्व्यङ्गुलं स्थूलं कुर्य्याद्वाङ्गुलिमात्रकम् ॥
काश्मरीवटजम्ब्वादि-पत्रैर्वेष्टनमुत्तमम् ॥

## कल्कमाह ।

द्रव्यमात्रं (२) शिलापिष्टं शुष्कं वा जलमिश्रितम् ।
तदेव सूरिभिः पूर्वैः कल्क इत्यभिधीयते ॥
आवापस्त्वथ प्रक्षेपस्तस्य पर्य्याय उच्यते ॥

## कल्कस्यैषद्भेदाच्चूर्णमाह ।

अत्यन्तशुष्कं यद्द्रव्यं सुपिष्टं वस्त्रगालितम् ।
चूर्णं तच्च रजः क्षोदस्तस्य पर्य्याय उच्यते ॥

---

(१) निःशेषितश्चापि सिद्धम् इति पाठान्तरम् ।
(२) अत्र "द्रव्यमार्द्रं" इति पाठान्तरम् ।

अन्यच्च ।

द्रव्यमात्रं शिलापिष्टं शुष्कं वा सजलं भवेत् ।
प्रक्षेपावापकल्कास्ते तन्मानं कर्षसम्मितम् ॥
कल्के मधु घृतं तैलं देयं द्विगुणमात्रया ।
सितां गुड़ं समं दद्यात् द्रवा देयाश्चतुर्गुणाः ॥

## अथ क्वाथमाह शार्ङ्गधरः ।

पानीयं षोड़शगुणं क्षुण्णे द्रव्यपले क्षिपेत् ।
मृत्पात्रे क्वाथयेद् ग्राह्यमष्टमांशावशेषितम् ॥
तज्जलं पाययेद्धीमान् कोष्णं मृद्वग्निसाधितम् ।
शृतः क्वाथः कषायश्च निर्य्यूहः स निगद्यते ॥
आहाररसपाके च सञ्जाते द्विपलोन्मितम् ।
वृद्धवैद्योपदेशेन पिबेत् क्वाथं सुपाचितम् ॥
क्वाथे क्षिपेत् सितामंशैश्चतुरष्टकषोड़शैः ।
वातपित्तकफातङ्के विपरीतं मधु स्मृतम् ।

अन्यच्च ।

द्रव्यादापोत्थितात्तोये वह्निना परिपाचितात् ।
निःसृतो यो रसः पूतः स शृतः समुदाहृतः ।
क्वाथः कषायो निर्य्यूहः पर्य्यायस्तस्य कीर्त्तितः ॥

## शीतमाह ।

क्षुसं द्रव्यपलं सम्यक् षड़्भिर्जलपलैः प्लुतम् ।
शर्वरीमुषितं सम्यक् ज्ञेयः शीतकषायकः ॥

## अवान्तरभेदात् तण्डुलोदकमाह ।

तण्डुलं कण्डशः कृत्वा पलं ग्राह्यं हि तण्डुलात् ।
चतुर्गुणं जलं देयं तण्डुलोदककर्म्मणि ॥

अन्येऽप्याहुः ।

शीतकषायमानेन तण्डुलोदककल्पना ।

## अथ फाण्टमाह ।

क्षुण्णे द्रव्यपले सम्यग्जलमुष्णं विनिक्षिपेत् ।
पात्रे चतुःपलमितं ततस्तु स्रावयेज्जलम् ॥
सोऽयं पूतो द्रवः फाण्टो भिषग्भिरभिधीयते ॥

## प्रसङ्गादुष्णोदकमाह ।

अष्टमेनांशशेषेण चतुर्थेनार्द्धकेन वा ।
अथवा क्वाथनेनैव सिद्धमुष्णोदकं वदेत् ॥

## क्वाथादेरवान्तरभेदाल्लेहादिकमाह ।

क्वाथादेर्यत् पुनः पाकाद्घनत्वं सा रसक्रिया ।
अवलेहश्च लेहश्च प्राश इत्युच्यते बुधैः ॥ (१)
वटको मोदकः पिण्डी गुड़ो वर्त्तिस्तथा वटी ।
वटिका गुड़िका चेति संज्ञावान्तरभेदतः ॥
मात्राच्छायातपच्छेद-वासविश्लेषपेषणैः ।
मन्थपीड़नसंयोग-जलकालबलाबलैः ॥
द्रव्ये गुणान्तराधानं विशिष्टं क्रियते यतः ।
तेन मोदकचूर्णादि-वटकाश्च यथाश्रुतिः ॥

अस्यार्थः ।

मात्रादयश्चैते द्रव्याणां विशिष्टगुणान्तराधानं जनयन्ति मात्रादिभेदात् । एकमपि द्रव्यं मात्रादिभेदेन विकारविशेषं नाशयति । यथा रसशास्त्रे त्रिविक्रमः । नवायसलौहं शोथ-पाण्ड्वादीन् हन्ति, त्रिकत्रयादिलौहञ्च ग्रहण्यादिकमित्यनयो-

(१) तन्मात्रा स्यात्पलोन्मिता इत्यपि पाठः ।

द्रव्याणां भेदाभावः। किन्त्वनयोः लौहस्य केवलमात्राभेदत्वेनैव गुणभेदः, एवं सर्वत्र छायातपादिष्वपि ज्ञेयम्। केषाञ्चिद्भेषजद्रव्याणामवान्तरभेदविरहेऽपि छायाशोषत्वेन च गुणभेद इति गुरवः।

## अथ द्रव्याणां मात्राविधिर्लिख्यते।

स्थितिर्नास्त्येव मात्रायाः कालमग्निं बलं वयः।
प्रकृतिं देशदोषौ च दृष्ट्वा मात्रां प्रकल्पयेत्॥
यतो मन्दानला ह्रस्वा हीनसत्त्वा नराः कलौ।
अतस्तु मात्रा तद्योग्या प्रोच्यते शुद्धसम्मता॥ (१)

अन्येऽप्याहुः।

नाल्पं हन्त्यौषधं व्याधिं यथाल्पाम्बु महानलम्।
दोषवच्चातिमात्रं स्यात् शस्यमत्युदकं यथा॥

अन्यच्च।

मात्रया हीनया द्रव्यं विकारं न निवर्त्तयेत्।
द्रव्याणामतिबाहुल्याद् व्यापत् संजायते ध्रुवम्॥

अन्यच्च।

मात्राया नास्त्यवस्थानं दोषमग्निं बलं वयः।
व्याधिं द्रव्यञ्च कोष्ठञ्च वीक्ष्य मात्रां प्रयोजयेत्॥
उत्तमस्य पलं मात्रा त्रिभिश्चाक्षैश्च मध्यमे।
जघन्यस्य पलार्द्धेन स्नेहक्वाथ्यौषधेषु च॥

अस्यार्थः।

उत्तमस्य प्रबलाग्निबलपुरुषस्य, न पुनर्युगविशेषजातस्य पुरुषस्य, क्षितौ कलावेव शास्त्रप्रचारात्। सत्ययुगादौ व्याध्यभावात्। उत्तमादिशब्दानां युगादीनामनभिधानाच्च पलमत्र

(१) सर्वसम्मतेति वा पाठः।

सौश्रुतमिति गुरवः। चरकार्द्धपलोन्मानं चरके दशरक्तिकैरिति सौश्रुतपलं चरकार्द्धपलम्। त्रिभिरच्चैरिति चरकस्य त्रिभिस्तोलैः। पलार्द्धेनेति चरके कर्षैकेन युगप्रभावात् जघन्या एव सर्वे, अतएव जघन्या मात्रा सर्वेषां दातव्या। किञ्च "कर्षश्चूर्णस्य कल्कस्य गुड़िकानाञ्च सर्वशः" इति जघन्यमात्रामाश्रित्य चक्रदत्तेन स्वसंग्रहे लिखितमिति दिक्। क्वाथ्यमित्यर्हणार्थे यत् क्वाथमर्हति इति क्वाथ्यम्। तेषु स्नेहक्वाथ्यौषधेषु अथवा क्वाथ्यौषधेषु चेति क्वाथ्यमौषधं यैः चीरजलकाञ्जिकादिभिः; अतस्तानि चीरादीनि भच्चणीयानि। अतो भच्चणमात्रेति गुरवः प्राहुः।

साद्धं पलं पलञ्चार्द्धं विदध्याद् गुड़खण्डयोः।
श्रेष्ठमध्यमहीनेषु मात्रेयं मुनिभिः कृता॥
अत्र स्यात् सौश्रुतं पञ्चरक्तिमाषात्मकं पलम्।
मोदकं वटकं लेहं कर्षमात्रं प्रयोजयेत्।
कर्षद्वयं पलं वापि देयं कोष्ठाग्न्यपेच्चया॥
श्रेष्ठमध्यमहीनेषु द्वादशाष्टचतुष्टयैः।
माषकैर्गुग्गुलोर्मात्रां कोष्ठं वीच्यावतारयेत्॥
गुञ्जामात्रं रसं देवि! हेमजीर्णञ्च भच्चयेत्।
तारं त्रिगुञ्जकं प्रोक्तं रविजीर्णं द्विगुञ्जकम्॥
लोहाभ्रनागवङ्गानां खर्परस्य शिलाजतोः।
षड्गुञ्जाप्रमिता मात्रा मलोपरसमाषकम्॥
कांस्यपित्तलयोर्मानं भच्चयेत् ताम्रजीर्णवत्।
यवमात्रं विषं देवि! गुञ्जामात्रन्तु कुष्ठिने॥
वज्रं यवद्वयमितं तालकं यवसप्तकम्।
ततो बुद्ध्वा भिषग् दद्यात् प्रायो मात्रेति कीर्त्तिता॥
यस्माच्च द्विविधं मानं कालिङ्गं मागधं तथा।

कालिङ्गान्मागधं श्रेष्ठमेवं मानविदो विदुः ॥
कालिङ्गं सौश्रुतं मानं पञ्चरक्तिकमानतः ।
दशरक्तिकमानन्तु मागधं चरकेरितम् ॥
तयोर्मागधमानन्तु प्रशंसन्ति भिषग्वराः ।
कालिङ्गं शुद्धलौहादि-द्रव्यस्य (१) कल्पने मतम् ।
कषायोऽनुवासनादि-द्रव्यादाने तु मागधम् ॥

## पाचनादौ जलपरिमाणमाह ।

कर्षादौ तु पलं यावद् दद्यात् षोड़शिकं जलम् ।
ततस्तु कुड़वं यावत् तोयमष्टगुणं भवेत् ॥
चतुर्गुणमतश्चोर्द्ध्वं यावत् प्रस्थादिकं भवेत् ।
क्वाथ्यद्रव्यपले कुर्य्यात् प्रस्थार्द्धं पादशेषितम् ॥

अस्यार्थः ।

क्वाथ्यद्रव्यपल इति । प्रबलाग्निबलपुरुषापेक्षया क्वाथ्यद्रव्यस्य पलं ग्राह्यम् । तत् साधनार्थं प्रस्थार्द्धं जलं दत्त्वा पादावशिष्टं कार्य्यम् । प्रस्थार्द्धत्वात् जलमष्टगुणं शरावद्वयं पादशेषेण पल-चतुष्टयं ग्राह्यमित्यर्थः ।

मृदौ चतुर्गुणं देयं कठिनेऽष्टगुणं भवेत् ।
कठिनात् कठिनं यच्च दद्यात् षोड़शिकं जलम् ॥
मृद्वादिद्रव्यसङ्घाते मानानुक्तौ चिकित्सकाः ।
मध्यस्थोभयभागित्वादिच्छन्त्यष्टगुणं जलम् ॥

मृद्वादि इति आर्द्र द्रव्यम्, आदिशब्दात् कठिनातिकठिनयोर्ग्रहणम् । एतेषां मिलितानां द्रव्याणाम् अनुक्तजलपरिमाणानां पाचनादिसाधनविधौ जलपरिमाणं मध्यस्य मध्यस्थितस्य मृद्वतिकठिनयोः कठिनस्य जलपरिमाणं प्राग् यदुक्तम्-अष्टगुणं तदेव

(१) गुड़लौहादिद्रव्यस्येति पाठान्तरम् ।

दत्त्वा पक्तव्यम् । उभयभागित्वादिति—उभयोर्मृदुतिकठिनयोः कठिनस्य जलपरिमाणं प्रागप्युक्तम् । मध्य एव भागोक्तत्वादिति जलमष्टगुणमुचितमेव गुरवः ।

**जलपरिमाणप्रसङ्गतः पाचनानां द्रव्यपरिमाणमाह ।**

दशरत्तिकमानेन गृहीत्वा तोलकद्वये ।
दत्त्वाम्भः षोड़शगुणं ग्राह्यं पादावशेषितम् ।
इमां मात्रां प्रकुर्व्वन्ति भिषजः पाचनेषु च ॥

**अथ यवाग्वादिसाधने जलभेषजयोः परिमाणमाह ।**

क्वाथ्यद्रव्याञ्जलिं चुस्तं श्रापयित्वा जलाढ़के ।
पादावशेषे तेनाथ यवाग्वाद्युपकल्पयेत् ॥
यूषांश्च रसकांश्चैव कल्पेनानेन साधयेत् ॥
यदप्सु शृतशीतासु षड़ङ्गादि प्रयुज्यते ।
कर्षमात्रं ततो द्रव्यं साधयेत् प्रास्थिकेऽम्भसि ।
अर्द्धशृतं प्रयोक्तव्यं पाने पेयादिसंविधौ ॥

कल्कसाध्यां पेयामाह केशरीटीकाकारः ।

कर्षार्द्धं वा कणाशुण्ठ्योः कल्कद्रव्यस्य वा पलम् ।
विनीय पाचयेद्युक्त्या वारिप्रस्थेन चापरान् ॥

अस्यार्थः ।—कर्षार्द्धमित्यादि कणा शुण्ठी च तयोर्मिलित्वा कर्षार्द्धं गृहीत्वा कल्कद्रव्यस्य च तण्डुलादेः पलं विनीय, विनीयेति पाठे नीत्वा इत्यर्थः । विलीयेति पाठे कल्कीकृत्येत्यर्थः । वारिप्रस्थेनेति एकत्वमविवक्षितं अग्न्याद्यपेक्षया अधिकेनेति यावत्, तेन प्रस्थद्वये जले साधयित्वार्द्धशृतेन वारिप्रस्थेन युक्त्या किञ्चिन्न्यूनेन अधिकेन वा प्रबलाग्निपुरुषापेक्षया इत्यश्चापराम् कल्कसाध्यां यवागूं पाचयेत् सुसिद्धां कुर्य्यादित्यर्थः । एवमन्यत्रापि पेयादिसाधने प्रबलाग्निपुरुषादौ युक्त्या प्रचुरतरं सलिलं

कल्कद्रव्यं वा ग्राह्यम्। साधनक्रममाह। कणाशुण्ठ्योः कर्षार्द्धं गृहीत्वा क्वाथ्यद्रव्यस्य पलञ्च प्रस्थद्वयेऽम्भसि अर्द्धशृतीकृत्य वारिप्रस्थं वस्त्रेण छानयित्वा नातिसान्द्रां नातिस्वच्छां यवागूं साधयेत्। कणाशुण्ठ्योः प्रत्येकं कर्षार्द्धं दत्वा पृथग्योगोऽयमिति कश्चित्। ननु यद्येवं भेषजं क्वाथः सामान्याधिक्यमपि तत् किमर्थं—"कर्षमात्रं ततो द्रव्यं साधयेत् प्रास्थिकेऽम्भसि।" इति षड़ङ्गपरिभाषा ? अत आह, षड़ङ्गपरिभाषायां प्राय इति प्राचुर्य्येण प्रचुरस्थले षड़ङ्गपरिभाषैव पेयादिसम्मता पेयादिषु कीर्त्तिता। पेयादिषु मन्यत इति यावत्। अयमर्थः प्रायेण षड़ङ्गपरिभाषैव व्यवहार इति षड़ङ्गपरिभाषोक्ता। प्रबलाग्निपुरुषे तु बहुभक्तरि स्तोकतोयेन यवागूर्न सिद्ध्यति युक्त्या क्वाथप्राबल्यं क्वाथप्राबल्ये भेषजप्राबल्यं, केशाकृष्या पतितमिति सर्वमवदातम्। निश्चलकरेण तु पलमत्र सौश्रुतमित्यवधेयमिति व्याख्यातम्। अत्र नारायणदासेन व्याख्यातं,—कणाशुण्ठ्योः कर्षार्द्धं वेति तीक्ष्णद्रव्योपलक्षणं, कल्कद्रव्यस्य वा पलमिति मृदुद्रव्योपलक्षणं, मृदुकठिनयोर्युक्त्या कर्षद्वयमिति अपरानिति ये यवाग्वादयः षड़ङ्गपरिभाषया सिद्धाः न तदर्थेऽयं परिभाषा, किन्तु तदितरार्थेऽयमित्यर्थः। आकृतिपूर्वमत्र कर्षमात्रं द्रव्यमुक्तम्, अत्र तु कर्षाधिकमपि पूर्वत्र तु प्रस्थमात्रं जलमुक्तम्। अत्र प्रबलाग्निबलपुरुषार्थं बहुयवागूसाधने प्रस्थाधिकमपि गृह्यते, क्वचित् प्रस्थन्यूनेऽपि यूषः साध्यते। पूर्वम् अर्द्धशृतजलमुक्तम्, अत्र तु क्वचित् पादावशिष्टमपि मांसरसे साध्यमाने पानयोग्यावशिष्ट इति युक्तिशब्दार्थः। तदेतदयुक्तं भवति। "यवागूः षड्गुणे तोये प्रस्थे प्रस्थाधिकेऽपि वा। रसेन पाके मांसस्य सुसिध्यति हि यावता॥ अष्टशिष्टो भवेद् यूषः क्वचित् पादावशेषतः। अष्टादशगुणे तोये यूषः शार्ङ्गधरेरितः॥" इति

गुरवस्त्वाहुः। परिभाषेयं पानीयसाधनविषयिणी चक्रपाणिदत्तेन पानीयसाधनप्रकरणे षड़ङ्गपानीयत्रयङ्गपानीयानन्तरं पिप्पलीपानीयं लिखितम्। कणाशुण्ठ्योः कषार्द्धं वारिप्रस्थेन साध्यम्। ननु अत्र कल्कद्रव्यस्य वा पलमिति कथमुक्तम्? अत आह नारायणान्तरङ्गः,—मृदुद्रव्य उपलक्षणमिति। यद्यपि पिप्पलीये पानीये आनुषङ्गिकत्वाद् युक्त्यापरान् यूषान् पेयादीन् वा धात्वपेक्षया साधयेत्, तदा तण्डुलादीनां पलं कल्कीकृत्य वारिप्रस्थेनार्द्धशृतेन साध्यम्, अतः षड़ङ्गपरिभाषैव प्रायः पेयादिसम्मतेत्युक्त्वा पश्चादेषा लिखिता, पेयादयस्तु षड़ङ्गपरिभाषया सर्वत्र साधनीयाः। प्रायःशब्दात् प्रचुरस्थले षड़ङ्गपरिभाषा सम्मता, तदितरार्थेयमिति।

## यवागूसाधने तण्डुलप्रकारमाह।

यवागूमुचिताद्भक्ताच्चतुर्भागकृतां वदेत्।

उचिततण्डुलाच्चतुर्भागैकभागमानं क्षुद्रिततण्डुलमाहुस्तैः कृतां यवागूं वदेदित्यर्थः, "याउ" इति लोके।

## अन्नादिसाधने जलपरिमाणमाह।

अन्नं पञ्चगुणे साध्यं विलेपी च चतुर्गुणे।
मण्डश्चतुर्दशगुणे यवागूः षड्गुणेऽम्भसि॥

## मण्डादिलक्षणमाह।

सिक्थकै रहितो मण्डः पेया सिक्थसमन्विता।
यवागूर्बहुसिक्था स्याद्विलेपी विरलद्रवा॥

अन्यच्च।

यवागूः षड्गुणे तोये सिद्धा स्यात् कृशरा घना।
तण्डुलैर्मुद्गमाषैश्च तिलैर्वा साधिता हि सा॥

यवागूर्ग्राहिणी बल्या तर्पणी वातनाशिनी ।
विलेपी च घना सिक्थैः सिद्धा नीरे चतुर्गुणे ।
विलेपी तर्पणी हृद्या मधुरा पित्तनाशिनी ॥
द्रवाधिका घना सिक्था चतुर्दशगुणे जले ।
सिद्धा पेया बुधैर्ज्ञेया यूषः किञ्चिद्घनः स्मृतः ॥
पेया लघुतरा ज्ञेया ग्राहिणी धातुपुष्टिदा ।
यूषो बल्यः स्मृतः कण्ठ्यो लघुपाकः कफापहः ॥
जले चतुर्दशगुणे तण्डुलानां चतुःपलम् ।
विपचेत् स्रावयेन्मण्डः स भक्तो मधुरो लघुः ॥
नीरे चतुर्दशगुणे सिद्धो मण्डस्त्वसिक्थकः ॥

तण्डुलानामिति क्षुद्रिततण्डुलानामित्यर्थः । स्रावयेदिति वस्त्रादिना चालयेत् । असिक्थक इति सिक्थकरहित इत्यर्थः । अन्नादिरहितसिक्थकः कुटीति ( सिटि ) लोके ।

## अथ मांसरससाधनविधानमाह ।

द्रव्यतो द्विगुणं मांसं सर्वतो द्विगुणं पयः ।
पादस्थं संस्कृतं चाज्ये षड़ङ्गो यूष उच्यते ॥
पलानि द्वादशप्रस्थे घनेऽथ तनुके तु षट् ।
मांसस्य वटकं कुर्य्यात् पलमच्छतरे रसे ॥

अस्यार्थः ।—घने मांसरसे कर्त्तव्ये, प्रस्थे जले मांसस्य द्वादशपलं दत्त्वा पक्तव्यम् । तदनु तनुके रसे कर्त्तव्ये मांसस्य षट्पलं पानीयं प्रस्थमेव दातव्यम् । अच्छतरे रसे कर्त्तव्ये, प्रस्थे जले मांसस्य पलं दत्त्वा एतन्मांसं पिष्ट्वा प्रस्थार्द्धशेषस्थितजले पक्त्वा अनुरूपं स्थाप्यं वस्त्रेण छानयित्वा यूषः कार्य्यः । मांसस्य वटकं कुर्य्यादिति खिन्नमांसस्य पलं पिष्ट्वा वटकान् विधाय घृतादौ

भर्ज्जयित्वा अच्छतररसं साध्यमित्यर्थः। अन्यथा मांसपलस्यातिद्रवपाके विलयनं स्यादित्याशङ्कया वटकं कुर्यादित्याह।

## लाक्षारससाधनमाह।

षड्गुणेनाम्भसा लाक्षा दोलायन्त्रे ह्युपस्थिता।
त्रिसप्तधा परिस्राव्या लाक्षारसमिदं विदुः॥

## अथ प्रक्षेपविधिमाह।

प्रक्षेपः पादिकः क्वाथ्यात् स्नेहे कल्कसमो मतः।
परिभाषामिमामन्ये प्रक्षेपेऽप्यूचिरे परम्॥

अस्यार्थः।—स्नेहे पातव्यघृतादिसाधने तैलादिसाधने वा प्रक्षेपः कल्कसमो मतः ज्ञायते स्म इत्यर्थः। शर्करा-मधुप्रभृतीनामिति क्वाथ्यादिति पाचनादिद्रव्यात् कर्षात् प्रक्षेपः पादिकश्चतुर्माषको ज्ञेय इति चक्रपाणिदत्तसम्मतः। अन्येऽपि वृद्धादयइमां परिभाषां प्रक्षेपेऽपि ऊचिरे परिभाषयाम्बभूवुः, अतएव चक्रदत्तोऽपि तत्स्वीकृत्य स्वसंग्रहे लिखितवान्।

## चूर्णादीनां भक्षणप्रकारमाह।

कर्षश्चूर्णस्य कल्कस्य गुड़िकानाञ्च सर्वशः।
द्रवशुक्त्या स लेढ़व्यः पातव्यश्च चतुर्द्रवः।
मात्रा चौद्रघृतादीनां स्नेहक्वाथेषु चूर्णवत्॥

अस्यार्थः।—चूर्णं कल्को गुड़िका, चकारात् वटिका च, यद्युपयुज्यते च तर्हि सर्वत्र वक्ष्यमाणविशेषं विना तोलकद्वयमुपयुज्यते। स चूर्णादिः कर्षो यदि लेढ़व्यः, तर्हि द्रवशुक्त्या माक्षिकप्रभृतीनां अर्द्धपलेन तोलकचतुष्टयेनेति यावत्, चूर्णस्य तथा लेढुं सुखत्वात्; पातव्यश्चेत् तदा चतुर्द्रव इति माक्षिकादीनां चतुर्गुणेन पलेनेति शेषः। तथा सति चूर्णस्य पातुं सुख-

त्वादित्यस्य प्रधानार्थः साम्प्रदायिकैश्चक्रदत्तादिभिर्मन्यते । अन्ये तु प्रक्षेपेऽप्येनां मन्यते । तथाहि तेषामयमर्थः,—यत्र चूर्णस्य कल्कस्य गुड़िकानाञ्च भेषजानामुपयोगस्तत्र कर्षः प्रक्षेपो दातव्यः । शेषार्थः सुगमः । मात्रा क्षौद्रघृतादीनामिति क्षौद्रप्रभृतीनां मधुघृतगुड़ानां स्नेहे क्वाथे वा प्रक्षेपश्चूर्णवत्; चूर्णस्य उक्तः । तर्हि यत्र घृतादयः प्रक्षेप्यास्तत्रैषां घृतक्षौद्रादीनां कर्ष इत्यर्थः । एतन्न रास्नादिक्वाथ्यस्य कर्षस्य प्रक्षेप्यं, मिलितयोः शर्करा-मधुनोः पादिकं माषचतुष्टयं प्रदेयमिति साम्प्रदायिकमतम् । यदुक्त-मन्यत्र,—"प्रक्षेपः पादिकः क्वाथ्यात् स्नेहे कल्कसमो मतः" इति "अयमग्रतसः सर्ववादिनामविवादतः" इति । अन्ये तु शर्करा-मधुनोः प्रत्येकं टङ्कणं कृत्वा मिलित्वा टङ्कणद्वयं कर्षं दातव्यमाहुः । "शाणौ द्वौ टङ्कणं विद्यात् तौ द्वौ कर्ष उडुम्बरः ।" परमतमव्याहतमनुमतमेवेति न्यायात् । चक्रदत्तानुमत-मेतत्, किन्तु सर्वत्र नैवम् । अपितु क्वचित् किञ्चिद्दोषवयो-वह्न्याद्यपेक्षया इत्यवधेयम् । वस्तुतस्तु वातज्वरार्त्ते रास्नादि-कषाये शर्करामाषकत्रयं मधुमाषैकं प्रक्षेप्तुमर्हति यथा चैतत्, तथा—"षोड़शाष्टचतुर्भागं वाते पित्ते कफे क्रमात् । क्षौद्रं कषाये दातव्यं विपरीता तु शर्करा" ॥ इति संहितोपाये स्वयमेव चक्रेण व्याख्यातम् । इह तु पादिकः प्रक्षेपात् क्रियासिद्धिरित्यभि-प्रायेण तन्नाभिहितं हेयमन्यत्; किञ्च चूर्णवदिति प्रक्षेप्यक्षौद्र-घृतादीनामपि चूर्ण इव, चूर्णस्य जरणादेर्यथा शाणः प्रक्षेपस्तथा क्षौद्रघृतादीनामपि शाणो देयः इति गुरवः । प्रक्षेपः पादिकः क्वाथ्यादिति वाक्यस्य एकवाक्यत्वान्मनोहरम् ।

क्वाथेन चूर्णपानं यत् तत्र क्वाथप्रधानता ।
प्रवर्त्तते न तेनात्र चूर्णापेक्षो चतुर्द्रवः ॥

अस्यार्थः ।—यत्र चूर्णपानं यौगिकं तत्र चूर्णस्य प्राधान्यात्

कर्षमानं, तस्मात् क्वाथ्यं चतुर्गुणं, तस्य क्वाथस्य तत्र अप्राधान्यं, यत्र क्वाथेन सह प्रक्षेप्यस्य चूर्णस्य पानं तत्र क्वाथस्य प्रधानत्वा-चूर्णापेक्षी चतुर्द्रवः चतुर्गुणत्वं द्रवस्य न प्रवर्त्तत इति ।

## मतान्तरमाह द्रव्यविशेषस्य ।

माषिकं हिङ्गु सिन्धूत्थं जरणाद्यास्तु शाणिकाः ।
सितोपलागुड़-क्षौद्रं सामान्यांशप्रकल्पनाः ॥

अस्यार्थः ।—हिङ्गुसैन्धवयोः प्रक्षेप्ययोस्तैस्त्रयाणाम्माषिकम् । जीरकाद्याः पुनः क्वाथ्यात् पादिका एव । सितोपलासिताशर्करादीनाञ्च सामान्यानां सामान्यवाक्यानां उत्तमस्य पलं मात्रा इत्यादीनामिव अंशांशकल्पनाः कार्य्या इति सामान्यांशम्, पलत्रिकर्षार्द्धपलरूपं सौश्रुतमित्यर्थः । सामान्यमिति प्रक्षेपः पादिकः क्वाथ्यादिति, तेन पादिका इति गुरवः ।

## दोषभेदे मधुशर्करयोः प्रक्षेपमानमाह ।

षोड़शाष्टचतुर्भागं वातपित्तकफार्त्तिषु ।
क्षौद्रं कषाये दातव्यं विपरीता तु शर्करा ॥

षोड़शाष्टचतुर्भागमिति वायौ पित्ते च कफे च कषायपाने क्षौद्रं प्रक्षेप्यम् । वायौ षोड़शांशं, पित्ते अष्टांशं, कफे चतुर्थांशम् । शर्करायास्तु वायौ चतुर्थांशं, पित्ते अष्टमांशं, कफे षोड़शांशमिति विपरीतेति वचनसामर्थ्यात् ।

## क्षीरादिपाकमाह ।

द्रव्यादष्टगुणं क्षीरं क्षीरात्तोयं चतुर्गुणम् ।
क्षीरावशेषः कर्त्तव्यः क्षीरपाके त्वयं विधिः ॥
क्षीरमस्त्वारनालानां पाको नास्ति विनाम्भसा ।
सम्यक्पाकं न गच्छन्ति तस्मात् तोयं चतुर्गुणम् ॥

एतत्तु वचनं केवलक्षीरपक्वपाचनादौ क्षीरपञ्चमूल्यादावित्यर्थः । नान्यत्र तैलघृतादिपाके, तत्र द्रवान्तरमस्त्येव, केवलतैलादिपाके चतुर्गुणं क्षीरमेवास्ति, न द्रवान्तरमस्ति, तत्र कण्ठोक्तत्वात् परिभाषा न प्रवर्त्तते । यथा "अव्यक्तानुक्तलेशोक्तसन्दिग्धार्थप्रकाशिका" इत्यभिप्रेत्य व्याख्येयमिति गुरवः ।

इति परिभाषाप्रदीपसंग्रहे द्वितीयः खण्डः ।

---

## तृतीयः खण्डः ।

### अथ स्नेहसाधने क्वाथ्यजलादेः परिमाणमाह ।

क्वाथ्याच्चतुर्गुणं वारि पादस्थं स्याच्चतुर्गुणात् ।
स्नेहात् स्नेहसमं क्षीरं कल्कस्तु स्नेहपादिकः ।
चतुर्गुणात्त्वष्टगुणं द्रवद्वैगुण्यतो भवेत् ॥

अपिच ।

अत्र द्रवान्तरानुक्तौ क्षीरमेव चतुर्गुणम् ।
द्रवान्तरेण योगे हि क्षीरं स्नेहसमं भवेत् ॥

अन्यच्च ।

जलमष्टगुणं क्वाथ्यात् क्वाथश्च जलपादिकः ।
क्वाथाच्च पादिकः स्नेहः स्नेहात् कल्कस्तु पादिकः ॥
पञ्चप्रभृति यत्र स्युर्द्रवाणि स्नेहसंविधौ ।
तत्र स्नेहसमान्याहुरर्वाक् च स्याच्चतुर्गुणम् ॥

अस्यार्थः ।—अथ स्नेहादेर्यत्र यशोधरव्याख्यामाह—अत्र मिलित्वैव चातुर्गुण्यमिति, युक्तमेव एकादिचतुर्द्रवपर्यन्तम् ।

अन्यथात्वानुपपत्तिः स्यात्। द्रवचतुष्टयविषयेण चरितार्थमेव तद्वचनम्। तत्र द्रवचतुष्टयसमत्वे तु न वस्तुच्चतिः। तस्मादेकेनापि चातुर्गुण्यम् इत्यादिः चतुःसममित्यन्ता परिभाषा द्रवचतुष्टयविषये तावत्। यत्र स्नेहादेः पाकविधौ द्रवाणि पञ्चप्रभृति-षट्सप्ताष्टाधिकतराणि च देयानि स्युः, तत्र स्नेहसमानानि देयानि। अर्वागिति पञ्चशब्दस्य, अर्वाक् पञ्चमादित्यर्थः। तेन एकादिचतुःपर्य्यन्तं द्रवाणां चातुर्गुण्यं स्नेहभागापेक्षया इति। एक-द्वि-त्रिद्रवयोगेऽपि मिलित्वा चातुर्गुण्यम्; चतुर्षु द्रवेषु तु प्रत्येकं स्नेहस्य भागापेक्षया चातुर्गुण्यमित्येके वदन्ति। एतेन चतुर्णां चातुर्गुण्यम्। त्रयाणामपि द्वयोरपि एकस्यापि चातुर्गुण्यम्। पञ्चापेक्षया एषाम् एकादिचतुर्णां प्रति चार्वाकत्वमित्यभिप्रायः।

अन्यच्च।

एकद्वित्रिद्रवद्रव्यैः कुर्य्यात् स्नेहाच्चतुर्गुणम्।
क्षीरं स्नेहसमं देयं चतुर्भिश्च चतुर्गुणम्॥
कल्काच्चतुर्गुणं स्नेहः स्नेहात्तोयं चतुर्गुणम्।
क्वाथ्याच्चतुर्गुणं वारि क्वाथः स्नेहसमो भवेत्॥
जलस्नेहौषधानाञ्च प्रमाणं यत्र नेरितम्।
पादः स्यादौषधं स्नेहात् स्नेहात्तोयं चतुर्गुणम्॥
वृषादिकुसुमात् कल्कः केवलस्नेहसिद्धये।
यत्रोक्तः स्नेहपादार्द्धः स्नेहकार्य्ये मनीषिभिः॥

अन्यच्च।

स्नेहः सिद्ध्यति शुद्धाम्बु-निःक्वाथस्वरसैः क्रमात्।
कल्कस्य योजयेदंशं चतुर्थं षष्ठमष्टमम्॥
स्वरसक्षीरमाङ्गल्यैः पाको यत्रेरितः क्वचित्।
जलं चतुर्गुणं तत्र वीर्य्याधानार्थमावपेत्॥

स्वरसक्षीरमाङ्गल्यैस्त्रोपलक्षणे तृतीया । माङ्गल्यं दधि ।

न मुञ्चति रसं द्रव्यं क्षीरादिभिरुपस्कृतम् ।
सम्यक् पाको न जायेत तस्मात्तोयं चतुर्गुणम् ॥

विष्णुतैलपाके केवलं दुग्धचतुर्गुणे पाकस्तत्र वीर्य्याधानार्थं जलं चतुर्गुणं केचिदिच्छन्ति, तदसत् । नायं क्षीरपाकः, किन्तु क्षीरचतुर्गुणे तैलस्य पाकः, नेदं तैलं द्रवप्रधानम्, एतदङ्गवरं तैलमिति ग्रन्थान्तरे पाठात्, अङ्गवरं कल्कप्रधानमित्यर्थः । अथवा पाको द्विविधः क्षीरस्य—क्षीरकरणकः, क्षीरकर्मकः । अत्र पुनः क्षीरकरणकः पाकः । क्षीरकर्म्मकः क्षीरपाकः "द्रव्यादष्टगुणं क्षीरं क्षीरात्तोयं चतुर्गुणम्" इति वचनात् । अत्र चतुर्गुणं द्रवं विना सम्यक् पाको न स्यादित्यर्थः । यदि तु विष्णुतैले जलं चतुर्गुणं ददाति तदा द्रवबाहुल्यदोषः स्यात्, चतुर्गुणदुग्धेनैव फलसिद्धेः, गुरवस्त्वाहुः । परिभाषा तु कण्ठोक्तं विना इति शेषः ।

स्नेहपाकविधौ यत्र क्षीरमेकन्तु कथ्यते ।
तोयादीनामनिर्द्देशे क्षीरमेव चतुर्गुणम् ॥

एतदेव समाधानमत्युचितम् ।

अकल्कोऽपि भवेत् स्नेहो यः साध्यः केवले द्रवे ॥
स्नेहपाकविधौ यत्र प्रमाणं नेरितं क्वचित् ।
स्नेहस्य कुड़वं तत्र पचेत् कल्कपलेन तु ॥
मानानुक्तौ घृते तैले प्रस्थमाहुश्चिकित्सकाः ॥
द्विगुणं त्रिगुणं वापि बहुमात्राच्च पादिकम् ।
योगं यदि पचेन्मूढ़ो हीनवीर्य्यं भवेत् तदा ॥
तुलाद्रव्ये जलद्रोणो द्रोणे द्रव्यतुला मता ।
अनुक्ते द्रवकार्य्ये तु सर्वत्र सलिलं मतम् ॥

अन्येऽप्याहुः।

अङ्गेऽप्यनुक्ते विहितन्तु मूलं भागेऽप्यनुक्ते समता विधेया।
द्रव्येऽप्यनुक्ते जलमेव देयं कालेऽप्यनुक्ते दिवसस्य पूर्व्वम्॥

प्रसारण्यादिनिर्दिष्टं शतमेकं पृथक् पृथक्।
जलद्रोणेन चैकैकं साधयेत् श्लक्ष्णकुट्टितम्॥
क्वाथ्यद्रव्यस्य बाहुल्यात् उदकं स्वल्पमेव तु।
सम्यक् पाकं न जायेत हीनवीर्य्यन्तु केवलम्॥
कल्कक्वाथावनिर्देशे गणात् तस्मात् समाहरेत्।
समस्तवर्गमर्द्धं वा यथालाभमथापि वा।
प्रयुञ्जीत भिषक् प्राज्ञः कालसात्म्यविभागवित्॥
यत्राधिकरणे नोक्तिर्गणे स्यात् स्नेहसंविधौ।
तत्रैव कल्कनिर्य्यूहाविष्येते स्नेहवेदिना॥

यत्रेत्यादि। अधिकारितया यत्र गणत्वमधिकृतं तत्रोभय-कल्पना, यत्र तन्नास्ति तत्र मुख्यतया कल्ककल्पनैव। अतः चक्र-पाणिकृतसंग्रहे पिप्पल्यादिघृते तेनैव परिभाषा लिखिता। तत्र निश्चलकरेण व्याख्यातम्। न चायं पिप्पल्यादिगणोऽधिकरणेन उक्तिरिति। अतः पिप्पल्यादेः कल्कसाध्यत्वं ज्ञेयम्, न क्वाथ-कल्कौ कुर्य्यात् इति। अत्र चोक्तम् "एतद्वाक्यबलादेव कल्कसाध्यं परं घृतम्" इति। यत्र स्नेहसाधने अधिकरणेन उक्तिः स्यात्तत्र गणे कल्कनिर्य्यूहौ साध्यौ। यत्र गणे अधिकरणेन उक्तिर्नास्ति तत्र कल्ककल्पनैव, न क्वाथः कार्य्य इति।

गणोक्तमपि यद् द्रव्यं भवेद्व्याधावयौगिकम्।
तदुद्धरेद् यौगिकन्तु प्रक्षिपेद् यदकीर्त्तितम्॥

यत्र व्याधौ ये गणाः सन्ति तत्रैव धात्वपेक्षया न विहितास्तत्र गणोक्ता अपि अयौगिकत्वात् हेयाः, धातुव्याध्यनुरूपम् अकीर्त्तितमपि यौगिकं प्रक्षिपेत्। यथा—वायौ रुक्षशेत्यादि।

तीक्ष्णकटुकादि पित्ते । कफे स्निग्धमधुरादि । एतत् सर्वं गणोक्तमपि न देयं, वातादिषु यदुपयुक्तं तदेव देयम् । यदुक्तं लौहशास्त्रे पातञ्जलादय: । "उचितमपि हेयमौषधमनुचितमुपादेयमिति संक्षेप:" । उचितमप्ययौगिकं हेयम्, अनुचितं यौगिकमपि धात्वनुरूपमुपादेयं ग्राह्यमित्यर्थ: ।

शार्ङ्गधरस्त्वाह ।

कल्काच्चतुर्गुणीकृत्य घृतं वा तैलमेव वा ।
चतुर्गुणद्रवे साध्यं तस्य मात्रा पलोन्मिता ॥

पलोन्मितेति पानादौ मात्रा देया निष्पन्नस्य घृतादे: ।

निक्षिप्य क्वाथयेत्तोयं क्वाथ्यद्रव्याच्चतुर्गुणम् ।
पादशेषं गृहीत्वा तु स्नेहं तेनैव साधयेत् ।

क्षीरे द्विरात्रं स्वरसे त्रिरात्रं तक्रारनालादिषु पञ्चरात्रम् ।
स्नेहं पचेद्दैव्यवर: प्रयत्नादित्याहुरेके भिषज: प्रवीणा: (१) ॥

द्वादशाहन्तु मूलानां वल्लीनां क्रममेव च ।
एकाहं व्रीहिमांसानां पाकं कुर्य्याद्विचक्षण: ॥
चतुर्गुणं मृदुद्रव्ये कठिनेऽष्टगुणं जलम् ।
तथाच मध्यमे द्रव्ये दद्यादष्टगुणं पय: ॥
अत्यन्तकठिने द्रव्ये नीरं षोड़शिकं मतम् ॥
कर्षादित: पलं यावत् क्षिपेत् षोड़शिकं जलम् ।
तदूर्द्धं कुड़वं यावद् भवेत् अष्टगुणं पय: ।
प्रस्थादित: क्षिपेन्नीरं खारी यावच्चतुर्गुणम् ॥
अम्बुक्वाथरसैर्यत्र पृथक् स्नेहस्य साधनम् ।
कल्कस्यांशं तत्र दद्याच्चतुर्थं षष्ठमष्टमम् ॥

(१) स्नेहान् विपाच्यैव विरामयेत् तु क्षीरे द्विरात्रं स्वरसे त्रिरात्रम् ।
कल्के कषायेषु च पञ्चरात्रं दध्यारनाले पुनरेकरात्रम् ॥ इति पाठान्तरम् ।

अस्यार्थः।—केवलजलसिद्धे स्नेहमात्रे कल्कस्य चतुर्थांशं स्नेहापेक्षया देयम्। एवं क्रमात् केवलन्तु क्वाथसिद्धे कल्कस्य षड़ंशं देयम्। रसैरिति स्वरसैः सिद्धे कल्कस्याष्टांशं देयमित्यर्थः।

दुग्धे दध्नि रसे तक्रे कल्को देयोऽष्टमांशिकः।
कल्कस्य सम्यक् पाकार्थं तोयमत्र चतुर्गुणम्॥

अस्यार्थः।—केवलदुग्धसिद्धे तैलादौ स्नेहादष्टांशिकः कल्कः कार्य्यः। एवं दध्नि रस इति स्वरूपे। तक्र इति पारिभाषिकतक्रे, सर्व्वत्राष्टांशिकः कल्को देयः। एतेषां घनत्वेन कदाचित् सम्यक् पाकाऽभावत्वात् सर्वस्मिन्नपि चतुर्गुणं जलं दापयन्ति वृद्धाः।

द्रवाणि यत्र स्नेहेषु पञ्चादीनि भवन्ति हि।
तत्र स्नेहसमान्याहुर्यथापूर्वं चतुर्गुणम्॥

पञ्चादीनीति पञ्चषट्सप्ताष्टकाणि तदतिरिक्तान्यपि यत्र स्नेहे द्रवाणि देयानि स्युः, तत्रेमानि स्नेहतुल्यानि भवन्ति। यथापूर्वमिति प्रतिलोमरीत्या पूर्वं पूर्वं चतुःप्रभृत्येकपर्य्यन्तं प्रत्येकं स्नेहाच्चतुर्गुणं द्रवं देयमिति केचिदाहुः। अन्ये तु एकादि-चतुःपर्य्यन्तं मिलित्वा चातुर्गुण्यं ददते, तेनैकस्यापि चातुर्गुण्यं, द्वयोरपि त्रयाणामपि चतुर्णामपि चातुर्गुण्यमिति। यथा महेश्वरश्चक्रशेषटीकायामाह। गुडूचीतैले गुडूचीक्वाथं द्वादश-शरावं दुग्धं शरावचतुष्टयम् मिलित्वा षोड़शशरावं टीकायां लिखति। एवं द्राक्षारसस्य षोड़शशरावं दत्त्वा एकस्य द्रवस्य चतुर्गुणं लिखति। एवं यष्टिमधुगाम्भारिफलयो-र्मिलितयोः चतुःषष्टिपलं गृहीत्वा पाकार्थं चतुःषष्टिशरावे पानिये पक्वावशिष्टषोड़शशरावं दत्त्वा तैलत्रयं पचति। यथा—"गुडूची-क्वाथदुग्धाभ्यां तैलं द्राक्षारसेन वा। सिद्धं मधुककाश्मर्य्यं रसैर्वा वातरक्तनुत्"॥ इति।

द्रव्येण केवलेनैव स्नेहपाको भवेद् यदि।

तत्राम्बुपिष्ट: कल्क: स्याज्जलश्चात्र चतुर्गुणम् ॥
क्काथेन केवलेनैव पाको यत्रेरित: क्वचित्।
क्वाथ्यद्रव्यस्य कल्कोऽपि तत्र स्नेहे प्रयुज्यते ॥
कल्कहीनस्तु य: स्नेह: स साध्य: केवले द्रवे ॥
पुष्पकल्कस्तु य: स्नेहस्तत्र तोयं चतुर्गुणम्।
स्नेहात् स्नेहाष्टमांशस्तु पुष्पकल्क: प्रयुज्यते ॥

## अथ स्नेहनिष्पत्तिलक्षणमाह ।

स्नेहकल्को यदाङ्गुल्या वर्त्तितो वर्त्तिवद्भवेत्।
वह्नौ क्षिप्ते च नो शब्दस्तदा सिद्धिं विनिर्दिशेत् ॥*
शब्दस्योपरमे प्राप्ते फेनस्योपरमे तथा।
गन्धवर्णरसादीनां सम्पत्तौ सिद्धिमादिशेत्।
फेनोऽतिमात्रं तैलस्य शेषं घृतवदादिशेत् ॥
एवमेव क्षारतोयं साधयेत्तु क्षतादिषु।
फेनोदयस्य निष्पत्तिर्नष्टदुग्धसमाकृति:।
स एव तस्य पाकस्य कालो नेतरलक्षणम् ॥
स्नेहपाकस्त्रिधा प्रोक्तो मृदुर्मध्य: खरस्तथा।
ईषत्सरसकल्कस्तु स्नेहपाको भवेन्मृदु: ॥
मध्यपाकस्य सिद्धिश्च कल्को नीरसकोमल:।
ईषत्कठिनकल्कश्च स्नेहपाको भवेत् खर: ॥
तदूर्द्ध्वं खरपाक: † स्याद् दाहकृन्निष्प्रयोजन:।
आमपाकश्च निर्वीर्य्यो वह्निमान्द्यकरो गुरु: ॥
नस्यार्थं स्यान्मृदु: पाको मध्यम: सर्वकर्म्मसु।
अभ्यङ्गार्थं खर: प्रोक्तो युञ्ज्यादेवं यथोचितम् ॥

---

* चिते कृशानौ न करोति शब्दं, नाङ्गुष्ठलेपी विशदोऽपि नास्ति। सम्वर्त्तितोवर्त्तिमुपैति कल्को निष्पत्तिरेषाघृततैलयोस्तु। इत्यधिक: पाठ:।

† दग्धपाक:स्यादिति वा पाठ:।

अन्यच्च ।

मृदुर्नस्ये खरोऽभ्यङ्गे वस्तौ पाने च मध्यमः ।
तुल्ये कल्के च निर्य्यासे भेषजानां मृदुः स्मृतः ।
शम्पाक (क) इव निर्य्यासो मध्यो दर्व्वीं विमुञ्चति ॥
शीर्य्यमाणे तु निर्य्यासे वर्त्तमाने खरः स्मृतः ॥
सर्वेषामिह द्रव्याणां मध्यपाकः प्रशस्यते ।
वरं पाको मृदुः कार्य्यः तथापि न खरो मतः ॥
किञ्चिद्वीर्य्यं मृदुर्धत्ते तज्जहाति खरः पुनः ॥

अन्यत्पाकलक्षणमाह ।

वर्त्तिवत् स्नेहकल्कः स्याद् यदाङ्गुल्या विवर्त्तितः ।
शब्दहीनोऽग्निनिक्षिप्तः स्नेहः सिद्धो भवेत्तदा ॥
यदा फेनोद्गमस्तैले फेनहीनस्तु सर्पिषि ।
वर्णगन्धरसोत्पत्तौ स्नेहसिद्धिस्तदा भवेत् ॥

अन्यच्च ।

घृत-तैल-गुड़ादींश्च नैकाह्नादवतारयेत् ।
व्युषितास्तु प्रकुर्वन्ति विशेषेण गुणान् यतः ॥
केवलं व्रीहिजन्त्वङ्ग-क्वाथो व्युष्टस्तु दोषलः * ॥

अथ गुड़पाकलक्षणमाह ।

यदा दर्वीप्रलेपः स्याद् यदा वा तन्तुलो भवेत् ।
तोयपूर्णे च पात्रे तु क्षिप्तो न प्लवते गुड़ः ॥
क्षिप्तस्तु निश्चलस्तिष्ठेत् पतितस्तु न शीर्य्यति ।
एष पाको गुड़ादीनां सर्वेषां परिकीर्त्तितः ॥

---

(क) शम्पाकः महारग्वधश्च: तस्य निर्यास इव । अव संयाव इति पाठान्तरम् दृश्यते ।

* घृत-तैल-गुड़ादींश्च साधयेन्नैकवासरे ।
प्रकुर्व्वन्त्युषिता ह्येते विशेषाद्गुणसञ्चयम् ॥ इत्यधिकः पाठः ।

सुखमर्द्दः सुखस्पर्शो गन्धवर्णरसान्वितः।
पीड़ितो भजते मुद्रां गुड़ः पाकमुपागतः॥
गुड़वद्गुग्गुल्लोः पाकः रसगन्ध(†)-विशेषतः।
श्रेष्ठमध्यमहीनेषु द्वादशाष्टचतुष्टयैः।
माषकैर्गुग्गुलोर्मात्रां व्याधिं वीच्य प्रयोजयेत्॥

## अथ लौहशोधनादिपरिभाषामाह।

(यदाहुस्त्रिविक्रमादयः लौहप्रदीपे)—
शुद्ध्यर्थं त्रिफला लौहात् कर्त्तव्या द्विगुणा सदा।
चतुर्गुणं फलात्तोयमर्द्धभागावशेषितम्॥
एष एव विधिर्नित्यं चालनेऽपि प्रशस्यते॥
वधार्थं त्रिफला ग्राह्या लौहान्नित्यं चतुर्गुणा।
तोयमष्टगुणन्तत्र चतुर्भागावशेषितम्॥
भानुपाकार्थमिच्छन्ति त्रिफलामयसा समाम्।
सलिलं द्विगुणन्तत्र चतुर्भागावशेषितम्॥
पाच्यद्रव्यात् तु पाकार्थं त्रिफला त्रिगुणेरिता।
स्यात् षोड़शगुणं तोयमष्टभागावशेषितम्॥
अन्यानि यानि वस्तूनि योक्तव्यानि पुटादिषु।
तानि लौहसमान्याहुर्जलं प्रागेव कीर्त्तितम्॥
लभ्यते स्वरसो येषां तेषां क्वाथोऽत्र नेष्यते।
त्रिफलाव्यतिरेकेण मतमेतत् पतञ्जलेः॥
एष एव विधिर्नित्यं चालनेऽपि प्रशस्यते॥
लौहवत् त्रिफला व्योम्नि त्रिफलावत् पयो मतम्।
प्राक्कीर्त्तितं जलञ्चात्र मृदुमध्यादिभेदतः॥

(†) पत्र सवर्णस्त्विति पाठान्तरम्।

मृदुमध्यकठोरत्वात् क्वाथ्यद्रव्यं त्रिधा मतम् ।
क्वाथ्यद्रव्यानुसारेण देयं स्थाप्यं जलं त्रिधा ॥

पतञ्जलिश्चाह सामान्यपरिभाषां लौहमारणार्थम् ।—

द्विगुणा त्रिफला लौहात् फलात् षोड़शिकं जलम् । (१)
अष्टभागावशिष्टन्तु मारणे जलमिष्यते ॥
समा च त्रिफला ग्राह्या जलञ्चाष्टगुणन्तथा ।
बधार्थे स्थापयेत् तोयं तस्यार्द्धं वस्त्रशोधितम् ॥
बधार्थेन समं ग्राह्यं पाकार्थञ्च समं फलम् ।
अष्टभागावशिष्टञ्च पाकार्थं जलमिष्यते ॥
एवं जलं फलं प्रोक्तं यथासंख्येन योजयेत् ॥

## अथ लौहपाकलक्षणमाह ।

तदुक्तं पतञ्जलिना ।

तावल्लौहं पचेद्वैद्यो यावद्वस्त्रेण गालितम् ।
समुद्रं जायते व्यक्तं न निःसरति सन्धिभिः ॥(२)

अन्यच्च ।

अङ्गुलिभ्यां निघृष्टन्तु यदा चूर्णत्वमागतम् ।
तदा सिद्धिं विजानीयाल्लौहं लौहविदां वरः ॥

अन्यच्च ।

अञ्जनाभं घनं स्निग्धं श्लक्ष्णभूत-*-मलेपनम् ।
अक्लिन्नमम्भसि क्षिप्तं सम्यक् पक्वस्य लक्षणम् ॥
मन्दमाहुरयो लौहमलञ्चाखिललक्षणम् ।
अतिपाकेन तज्ज्ञेयं खरमुज्झितलक्षणम् ॥

---

(१) पचेत् षोड़शिके जले इति पाठान्तरम् ।

(२) सन्दिभि रित्यपि पठ्यते ।

* श्लक्ष्णमूलमिति वा पाठः ।

अमोघ-तन्त्रे चोक्तम्।

पाकस्तु त्रिविधः प्रोक्तो मृदुमध्यमतीक्ष्णकः।
त्रैविध्यात् सर्वधातूनां पित्तानिलकफात्मनाम्॥
दर्व्यामाश्लिष्यते यत्तत् स्वैरं स्खलति वा न वा।
मृदुपाकं विजानीयात् पित्ते तद्वीचय योजयेत्॥
सिक्तापुञ्जोपमं यत् तु मूषिकेण समन्वितम्।
तदयः खरपाकं स्यात् श्लेष्मण्येव प्रकीर्त्तितम्॥
एकैकगुणयोगित्वान्न तदिच्छन्ति तद्विदः।
सर्वप्रकृतिसेव्यत्वान्मध्यमं बहुपूजितम्।
गुड़ादिः प्रविशेद् यत्र तत्र पाकोऽस्य मुद्रया॥

## अथ भावनाविधिः।

द्रवेण यावता द्रव्यमेकीभूयाद्र्रतां व्रजेत्।
तावत् प्रमाणं कर्त्तव्यं भिषग्भिर्भावनाविधौ॥

अत्र जलं पाकार्थमष्टगुणं देयं ग्रन्थान्तरदर्शनात्। "भाव्य-द्रव्यसमं क्वाथ्यं क्वाथ्यादष्टगुणं जलम्" इति पश्चाल्लिखितमेव। केचित् तु अनुक्तजलपरिमाणे चतुर्गुणं जलं दत्वा, द्रवत्वादि-विदस्त्वष्टांशशेषं गृह्णन्ति॥

दिवा दिवातपे शुष्कं रात्रौ रात्रौ च वासयेत्। (क)
श्लक्ष्णं (ख) चूर्णीकृतं द्रव्यं सप्ताहं भावनाविधिः॥

ग्रन्थान्तरे च।

भाव्यद्रव्यसमं क्वाथ्यं क्वाथ्यादष्टगुणं जलम्।
अष्टांशशेषितः क्वाथो भाव्यानां तेन भावना॥

---

(क) भावयेत् इति पाठान्तरम्।

(ख) शुष्कमिति वा पाठः।

## अथ क्षारोदकमाह।

पानीयो यस्तु गुल्मादौ तं वारानेकविंशतिम्।
स्रावयेत् षड्गुणे तोये केचिदाहुश्चतुर्गुणे॥

क्षारात् षड्गुणं जलं दत्वा वस्त्रेण दोलायन्त्रं विधाय तदधः पात्रं पातयित्वा क्षारोदकं ग्राह्यम्। एवमेकविंशतिवारं पुनःपुनः स्रावयित्वा ग्राह्यम्। अथवा केचिदाहुः क्षाराच्चतुर्गुणं जलं दत्वा चतुर्थावशिष्टे स्रावयित्वा तज्जलं ग्राह्यम्॥

## अथ द्विरुक्तद्रव्यग्रहणम्।

घृततैलादियोगे च यद्द्रव्यं पुनरुच्यते।
ज्ञातव्यं तदिहाचार्य्यैर्भागतो द्विगुणेन हि॥

आदिशब्देन चूर्णवटिकादिलेहप्रभृतिषु ज्ञेयमिति।

## अथ चूर्णस्य पाकनिषेधमाह।

प्रायो न पाकश्चूर्णानां भूरिचूर्णस्य तेन हि।
आसन्नपाके प्रक्षेपः स्वल्पस्य पाकमागते॥

प्राय इति प्राचुर्य्येण प्रचुरार्थ इति। आसन्नपाक इति उपस्थितपाके, न तु पाकमापन्ने, तथा सति प्रचुरचूर्णानां प्रवेशो न स्यादित्यर्थः। स्वल्पस्य चूर्णस्य पाकान्ते कटुष्णदशायां प्रक्षेप इति शेषः॥

चूर्णे चूर्णसमो ज्ञेयो मोदके द्विगुणो गुड़ः॥
संख्या पलानां शतशः पलं प्रश्रूयते यतः।
तदा चाकृतिमानेन तेषान्तु ग्रहणं विदुः॥

आकृतिमानेनेति यदनुरूपसंख्या येषां तथा तेषां द्रव्याणां ग्रहणं विदुः। एतेन मृद्वादीनां द्वैगुण्यं नानुष्ठेयम्। "पलोल्लेखागते माने न द्वैगुण्यमिहेष्यते" इति वचनात्।

## अथानुपानविधिमाह ।

स्थिरतां गतमक्लिन्नमन्नमद्रवपायिनः ।

भवत्याबाधजनकमनुपानमतः पिबेत् ॥

आबाधमिति आ सम्यक् प्रकारेण बाधकं पीड़ाजनकमित्यर्थः ।

यथा जलगतं तैलं क्षणेनैव प्रसर्पति ।

तथा भैषज्यमङ्गेषु प्रसर्पत्यनुपानतः ॥

रोचनं बृंहणं वृष्यं दोषघ्नं वातभेदनम् ।

तर्पणं मार्द्दवकरं श्रमक्लमहरं परम् ॥

दीपनं दोषशमनं पिपासाच्छेदनं परम् ।

रसवर्णकरञ्चापि अनुपानं सदोच्यते ॥

वातापिर्भक्षितो येन अगस्त्येन द्विजोत्तम !

अनुपानं कृतं तेन का कथा सर्वदेहिनाम् ॥

अनुपानं करोत्यूर्ज्जं तृप्तिं व्याप्तिं दृढ़ां गतिम् ।

अन्नसङ्घातशैथिल्य-विक्लित्तिजारणानि च ॥

"व्याप्तिं" शरीरव्यापिनीम् । विक्लित्तिर्विक्लिन्नता इत्यर्थः ।

स्निग्धोष्णं मारुते शस्तं पित्ते मधुरशीतलम् ।

कफेऽनुपानं रूक्षोष्णं क्षये मांसरसं पयः ॥ (क)

उष्णोदकानुपानञ्च स्नेहानामथ शस्यते ।

ऋते भल्लातकस्नेहात् तत्र तोयं सुशीतलम् ॥

अन्यच्च ।

भल्लाततौवरे (ख) स्नेहे शीतमेव जलं पिबेत् ।

---

(क) परमिति वा पाठः ।

(ख) पर्वैस्तु केशराकारैः कलायसदृशैः फलैः ।

वृचस्तुवरको नाम पश्चिमार्णवतीरजः ॥

भारुष्करं तौवरकं कषायं कटुपाकि च ।

उष्णङ्कृमिज्वरानाहमोहोदावर्त्तनाशनम् ॥ इति सुश्रुतसंहितायाम् ।

जलमुष्णं घृते पेयं यूषस्तैलेऽनुशस्यते ॥ (१)
वसामज्जाम्लमण्डेसु सर्वेषूष्णमथाम्बु वा ॥

अन्यच्च ।

शीतोष्णतोयासवमद्ययूष-फलाम्बुधान्याम्लपयोरसानाम् ।
यस्यानुपानन्तु भवेद्धितं यत्तस्मै प्रदेयं त्विह मात्रया तत् ॥

अन्यच्च ।

यूषो मांसरसो वापि शालिमुद्गादिभोजिनाम् ।
मांसादीनां चानुपानं धान्याम्लं दधिमस्तु वा ॥

## अथानुपानमात्रामाह ।

अनुपानं प्रयोक्तव्यं व्याधौ श्लेष्मभवे पलम् ।
पलद्वयन्त्वनिलजे पित्तजे तु पलत्रयम् ॥
गुड़क्षौद्रसितादीनां पलार्द्धञ्च विशेषतः ।
पलमत्र सौश्रुतम् ।
दीप्ताग्नयो महाकायाः स्नेहसात्म्या महाबलाः ।
विसर्पोन्मादगुल्मार्त्ताः सर्पदंष्ट्राविषार्द्दिताः ॥
ज्येष्ठां मात्रां पिबेयुस्ते पलान्यष्टौ विशेषतः ।

## अथ लौहानुपानमाह ।

माहिषं गव्यमाजञ्च पयो ग्राह्यं त्रिधायसि ।
माहिषं भस्मके देयमाजं क्षीरं पुनर्मतम् ॥
कोष्ठदोषे कफे श्वासे कासे चापि नवज्वरे ।
गव्यमन्यत्र सर्वत्र समवारिप्रसाधितम् ॥
सर्वत्र गव्यमेवेति मतमाह पतञ्जलिः ।
अनुपानं प्रयोक्तव्यं लौहात् षष्टिगुणं पयः ॥

(१) लेहेऽनुशस्यते इत्यपरः पाठः ।

यदा तु वर्द्धितं क्षीरं तदार्द्धं भोजने पिबेत्।
दद्यात् समशने तस्य योऽत्यर्थं क्षीणपावकः॥

## अथानुपानविशेषमाह।

अनुपानं हिमं वारि यवगोधूमयोर्हितम्।
दधिमण्डे विषे क्षौद्रेऽनुष्णं पित्तामयेऽपि च
ऊर्द्धजत्रुगदे श्वास-कासोरःक्षतपीनसे।
मौनभाष्यप्रसक्तेषु स्वरभेदे न तद्धितम्॥
न पिबेत् श्वासकासार्त्तो रोगे चाप्यूर्द्धजत्रुगे।
क्षतोरस्कः प्रसेकी च यस्य चोपहतः स्वरः॥

## अथ शिशोर्भेषजपरिमाणमाह।

प्रथमे मासि जातस्य शिशोर्भेषजरक्तिका।
अवलेह्या तु कर्त्तव्या मधुक्षीरसिताघृतैः॥
एकैकां वर्द्धयेत् तावत् यावत् संवत्सरो भवेत्।

जातस्य शिशोर्बालकस्य प्रथमे मासि भेषजस्य रक्तिका मात्रा, मध्वादिभिर्लेढुं दातव्या। प्रथममासादारभ्य द्वादशमास-पर्य्यन्तं मासं मासं प्रति रक्तिकैकावृद्धिः कार्य्या, नात्र दश-रक्तिकपरिमाणमाषकविभागः। किन्तु संवत्सरपूर्णार्थं द्वादश-रक्तिका मात्रा देयेति भावः।

तदूर्द्धं माषवृद्धिः स्याद् यावदाषोड़शाब्दिकः।
ततस्तु सप्ततिं यावत् कर्षमात्रां प्रयोजयेत्॥
एवमेव विभागोऽयं तदूर्द्धं बालवत् क्रिया।

तदूर्द्धमिति द्वादशमासादूर्द्धं तेन द्वितीयवर्षे प्रथममासा-दारभ्य षोड़शवर्षपर्य्यन्तं माषकवृद्ध्या कर्षपूरणं कार्य्यम्। ततः षोड़शवर्षात् सप्ततिं यावत् तावदेव कर्षेणैव व्यवहारः। तदूर्द्धं सप्ततेः परं यावज्जीवनपर्य्यन्तं बालवत् मात्रा कार्य्येति शेषः।

अन्येऽप्याहुः।

रत्तिमारभ्य कर्षन्तु मानं बालगदे मतम्।
कर्षादौ तु जलस्रुत्या क्वाथस्य कार्षिको मतः॥

कर्षादाविति प्रागुक्तं परिभाषया। "कर्षादौ तु पलं यावद् दद्यात् षोड़शिकं जलम्" इत्याख्यायेति शेषः।

यस्तु स्यात् क्षीरपो बालः कषायं पातुमक्षमः।
तदा भिषक् कुमारस्य तस्य धात्रीञ्च पाययेत्॥
ये गदानाञ्च ये योगाः प्रोक्ताः स्वे स्वे चिकित्सिते।
तेषां कल्केन संलिप्तौ कुमारं पाययेत् स्तनौ॥
त्रिविधाः कथिता बालाः क्षीरान्नोभयवर्त्तिनः।
स्वास्थ्यं ताभ्यामदुष्टाभ्यां दुष्टाभ्यां व्याधिसम्भवः॥

बालास्तु त्रिविधा भवन्ति,—क्षीरवर्त्ती, अन्नवर्त्ती, उभयवर्त्ती च। उभयवर्त्तीति क्षीरान्नाभ्यां द्वाभ्यां वर्त्तनं येषामिति।

## अथ भैषज्यभक्षणकालमाह।

भैषज्यकालो भक्तादौ मध्ये पश्चान्मुहुर्मुहुः।
सामुद्गं भक्तसम्भुक्तं ग्रासे ग्रासान्तरेऽष्टधा॥
अपाने विगुणे पूर्वं समाने मध्यभोजने।
व्याने तु प्रातरशनमुदाने भोजनोत्तरम्॥
वायौ प्राणे प्रदुष्टे तु ग्रासे ग्रासान्त इष्यते।
श्वासकासपिपासासु तत्तु कार्य्यं मुहुर्मुहुः॥
सामुद्गं हिक्किने देयं लघुनाऽन्नेन संयुतम्।
सभोज्यं त्वौषधं भक्ष्यैर्विचित्रैररुचौ हितम्॥

सामुद्गमिति—"सामुद्गं भेषजं विद्यादन्नस्याद्यवसानयोः" इति।

अन्येत्वाहुः ।

अभक्तं पूर्वभक्तञ्च मध्यभक्तं सभक्तकम् ।
भक्तोपरिष्टात् सामुद्रं भक्तस्यैवान्तरेऽपि च ॥
ग्रासे ग्रासान्तरे चैव मुहुर्मुहुरिति स्मृतः ।
काला दशैते धीमद्भिरौषधस्य समासतः ॥
बलिनो महतो व्याधेरभुक्तं भेषजं हितम् ।
सर्वव्याधिहरं पथ्यं पूर्वभक्तं महौषधम् ।
मध्यकायगतान् रोगान् मध्ये भक्तं निहन्ति च
सभक्तं सुकुमाराणां बालानामौषधद्विषाम् ॥
भक्तोपरिष्टात् ग्रस्तञ्च ऊर्द्धजत्रुविकारिणाम् ।
सम्बन्धे वर्च्चसां मुद्रं दीप्ताग्निबलिनां हितम् ॥
भक्तयोरन्तरे ज्ञेयं भोजनद्वयमध्यतः ।
तच्च नित्यं प्रयुञ्जीत मध्यदेहविकारिणाम् ॥
ग्रासे ग्रासे क्षयाग्नीनां वाह्यासक्तधियामपि ।
ग्रासान्तरे हितं विद्यात् कुष्ठमेहविकारिणाम् ।
श्वासकासपिपासानां तत्तु कार्य्यं मुहुर्मुहुः ॥

अन्यच्च ।

भैषज्यमभ्यवहरेत् प्रभाते प्रायशो बुधः ।
कषायांस्तु विशेषेण तत्र भेदस्तु दर्शितः ॥

भेदः पुनः कषायपानेन वा पयस्तु प्रातः सायं मध्याह्ने रात्रौ च व्याधिविशेष-धातुविशेष-प्रकृतिविशेष-तारतम्यतया देयमित्यर्थः ।

प्रथमकालः ।

ज्ञेयः पञ्चविधः कालो भैषज्यग्रहणे नृणाम् ।
किञ्चित् सूर्य्योदये जाते तथा दिवसभोजने ॥

सायन्तने भोजने च मुहुश्चापि तथा निशि ।
प्रायः पित्तकफोद्रेके विरेकवमनार्थयोः ॥
लेखनार्थे च भैषज्यं प्रभातेऽनन्नमाहरेत् ।
एवं स्यात् प्रथमः कालो भैषज्यग्रहणे नृणाम् ॥

द्वितीयकालः ।

भैषज्यं विगुणेऽपाने भोजनाग्रे प्रशस्यते ।
अरुचौ चित्रभोज्यैश्च मिश्रं रुचिरमाहरेत् ॥
समानवाते विगुणे मन्देऽग्नावपि दीपनम् ।
दद्याद् भोजनमध्ये तु भैषज्यं कुशलो भिषक् ।
व्यानकोपे च भैषज्यं भोजनान्ते समाहरेत् ॥
हिक्काक्षेपककम्पेषु पूर्वमन्ते च भोजनात् ।
एवं द्वितीयकालश्च प्रोक्तो भैषज्यकर्म्मणि ॥

तृतीयकालः ।

उदाने कुपिते वाते स्वरभङ्गादिकारिणि ।
ग्रासे ग्रासान्तरे देयं भैषज्यं सात्म्यभोजने ॥ (क)
प्राणे प्रदुष्टे सात्म्यस्य भक्तस्यान्ते च दीयते ।
औषधं प्रायशो धीरैः कालोऽयं स्यात् तृतीयकः ॥

चतुर्थकालः ।

मुहुर्मुहुश्च तृट्छर्दि-हिक्काश्वासगरेषु च ।
सान्नञ्च भेषजं दद्यादिति कालश्चतुर्थकः ॥

पञ्चमकालः ।

ऊर्द्ध जत्रुविकारेषु लेखने वृंहणे तथा ।
पाचने शमने देयमनन्नं भेषजं निशि ।
इत्ययं पञ्चमः कालः प्रोक्तो भैषज्यहेतवे ॥

---

(क) "साम्यभोजने" इति पाठान्तरम् ।

## अथ क्रियाकालव्यवस्थामाह।

या तूदीर्णं शमयति नान्यं व्याधिं करोति च।
सा क्रिया न तु या व्याधिं हरत्यन्यमुदीरयेत्॥

अन्यमिति ज्वरादीनाम् अन्यतमं न उदीरयेदिति न वर्द्धयेत्, न जनयेदित्यर्थः। तथा च चरकचिकित्साप्रास्तीयाध्याये :—

याभिः क्रियाभिर्जायन्ते शरीरे धातवः समाः।
सा हि क्रिया विकाराणां कर्म्म तद्भिषजां मतम्॥

भिषजां चिकित्सकानामित्यर्थः।

अल्पे गदे महत्कर्म्म क्रिया लघ्वी महागदे।
द्वयमेतदकौशल्यं कौशल्यं युक्तिकर्म्मता॥
क्रियायास्तु गुणालाभे क्रियामन्यां समाचरेत्।
पूर्वस्यां शान्तवेगायां न क्रियासङ्करो मतः॥

सङ्करो व्यामिश्रता। अतो मुख्यप्रयोगानां मिश्रणम् एकस्मिन्नेव रोगिणि न कर्त्तव्यं, परस्परगुणविरोधात् भैषज्यगुणवैकल्यादग्निमान्द्यजननत्वाच्च।

तथापि साङ्कर्य्यमाह।

क्रियाभिस्तुल्यरूपाभिः क्रियासाङ्कर्य्यमिष्यते।
भिन्नरूपतया तास्तु तन्न कुर्वन्ति दूषणम्॥

तुल्यरूपाभिः क्रियाभिः क्रियासाङ्कर्य्यमिष्यते, तु पुनस्ताः क्रियाः चेद्भिन्नरूपा भवन्ति तदा न साङ्कर्य्यमिति तु शब्देनैतदुच्यते। अतो भिन्नरूपतया अतुल्यरूपाभिः क्रियाभिर्न क्रियासाङ्कर्य्यं भवतीत्यर्थः। एतेनैवं बोधयति पाचनघृतयोर्द्वयोर्गुड़-वटक-लेहगुड़िकादीनाञ्च पाचनयुक्तानामेकस्मिन्नेव रोगिण्येकदिने प्रयोगः कर्त्तव्यो यथा—व्याधेरनुपानं यद्यत्पाचनं विहितमिति; किन्तु भिन्नरूपेणौषधद्वयेन दोषः प्रसङ्गः स्यादेव, अतः परस्पर-

विरोधित्वेन औषधद्वयकल्पना न कार्य्या । यथा गुड़िकाद्वये लेहद्वयमधिकमिति दिक् ।

षड्भिः केचिदहोरात्रैः केचित् सप्तभिरेव च ।
इच्छन्ति मुनयः प्रायो रसस्य परिवर्त्तनम् ॥
शीते शीतप्रतीकार उष्णे चोष्णनिवारणम् ।
कृत्वा कुर्य्यात् क्रियां प्राप्तां क्रियाकालं न हापयेत् ॥
सर्वत्र रोगे प्रशमाय कर्म्म हीनातिरिक्तं विपरीतकालम् ।
मिथ्योपचारान् न हि तद्विकारं शान्तिं नयेत् पथ्यमपि प्रयुक्तम् ॥

## अथ पारिभाषिकीसंज्ञामाह ।

### चतुरम्लं पञ्चाम्लञ्च ।

वृक्षाम्लमातुलुङ्गाम्लौ वदराम्लाम्लवेतसौ ।
चतुरम्लमिदं तद्धि पञ्चाम्लञ्च सदाड़िमम् ॥

### पञ्चलवणम् ।

सौवर्च्चलं सैन्धवञ्च विड़मौद्भिदमेव च ।
सामुद्रेण सहैतानि पञ्च स्युर्लवणानि च ।
एक-द्वि-त्रि-चतुः-पञ्च-लवणानि क्रमाद्विदुः ॥

### अष्टमूत्रम् ।

अविमूत्रमजामूत्रं गोमूत्रं माहिषञ्च यत् ॥
हस्तिमूत्रमथोष्ट्रस्य हयस्य च खरस्य च ।
इति प्रोक्तानि मूत्राणि यथासामर्थ्ययोगतः ॥

### चतुःस्नेहाः ।

सर्पिस्तैलं वसा मज्जा स्नेहोऽप्युक्तश्चतुर्विधः ।
पानाभ्यञ्जनवस्त्यर्थं नस्यार्थञ्चैव योगतः ॥

### अष्टक्षीरम् ।

अविक्षीरमजाक्षीरं गोक्षीरं माहिषञ्च यत् ।
उष्ट्रीणां हस्तिनीनाञ्च वड़वायाः स्त्रियस्तथा ॥

त्रिसुगन्धित्रिजातचातुर्जातकादयश्च ।

चातुर्जातं समाख्यातं त्वगेलापत्रकेशरैः ।
तदेव त्रिसुगन्धि स्यात् त्रिजातकमकेशरम् ॥
चातुर्जातककर्पूर-कक्कोलागुरुसिह्लकम् ।
लवङ्गसहितञ्चैव सर्वगन्धं विनिर्दिशेत् ॥

त्रिफलादयम् ।

पथ्या विभीतकं धात्री फलत्री त्रिफला मता ।
स्वल्पा काश्मर्य्यखर्जूर-परूषकफलैर्भवेत् ॥

त्र्यूषणं, त्रिमदश्च ।

पिप्पली शृङ्गवेरञ्च मरिचं त्र्यूषणं विदुः ।
विड़ङ्गमुस्तचित्रैश्च त्रिमदः समुदाहृतः ॥

पञ्चक्षीरिवृक्षाः ।

उडुम्बरो वटोऽश्वत्थो वेतसः (क) प्लक्ष एव च ।
पञ्चैते क्षीरिणो वृक्षाः संज्ञायां समुदाहृताः ॥

वेतसोऽत्र गन्धिन इति ख्यातः । गन्धमुस्त इत्युत्तरदेशे यस्य प्रसिद्धिः । प्लक्ष इति वटः; अथवा पर्कटीत्यश्वत्थभेदः ।

पञ्चपल्लवम् ।

आम्र-जम्बु-कपित्थानां वीजपूरकविल्वयोः ।
गन्धकर्म्माणि सर्वत्र पत्राणि पञ्चपल्लवम् ॥

पञ्चकोलं, षड़्षणञ्च ।

पिप्पली पिप्पलीमूलं चव्यचित्रकनागरम् ।
पञ्चकोलमिदं प्राहुः पञ्चोषणमथापरे ॥
पञ्चकोलं समरिचं षड़्षणमुदाहृतम् ।

(क) शालाक्ये तु वेतसस्थाने मधुकं निक्षिप्य पञ्चक्षीरिवृक्षा व्याख्याताः ।

पञ्चमूलदशमूलादयः ।

विल्वश्योणाकगाम्भारी पाटला गणिकारिका ॥
एतन्महत् पञ्चमूलं संज्ञया समुदाहृतम् ।
शालपर्णी पृश्निपर्णी वृहतीद्वयगोक्षुरम् ॥
कनीयः पञ्चमूलं स्यात् उभयं दशमूलकम् ।

तृणपञ्चमूलम् ।

कुशः काशः शरो दर्भः इक्षुश्चैव तृणोद्भवम् ॥
पञ्चतृणमिदं ख्यातं तृणजं पञ्चमूलकम् ।

वल्लीपञ्चमूलम् ।

विदारी चाजशृङ्गी च रजनी सारिवामृतम् ॥
वल्लीजं पञ्चमूलञ्च कथितं मुनिपुङ्गवैः ।

कण्टकपञ्चमूलम् ।

करमर्द्दः श्वदंष्ट्रा च हिंस्रा * भिण्टी शतावरी ॥
कण्टकाख्यं पञ्चमूलं निर्दिष्टं सूक्ष्मबुद्धिभिः ।

करमर्दः करञ्जः । श्वदंष्ट्रा गोक्षुरकः । हिंस्रा कुड़वकाली, कालियाकड़ा । स्पष्टमन्यत् ।

अष्टवर्गः ( जीवनीयाष्टकम् । )

ऋद्धिर्वृद्धिश्च मेदे द्वे तथार्षभकजीवकौ ।
काकोली-क्षीरकाकोलीत्यष्टवर्गः प्रकीर्त्तितः ॥

जीवनीयगणः ।

अष्टवर्गश्च पर्णिन्यौ जीवन्ती मधुकं तथा ।
जीवनीयगणः प्रोक्तो जीवनश्च पुनस्ततः ॥

श्वेतमरिचं, ज्येष्ठाम्बु सुखोदकञ्च ।

शोभाञ्जनस्य यद्वीजं तत् श्वेतमरिचं स्मृतम् ।
ज्येष्ठाम्बु तण्डुलाम्बु स्यात् उष्णाम्बु च सुखोदकम् ॥

* "हिंस्रा" इत्यत्र शिवदासादयः केचित् अहिंस्रेत्यपि पठन्ति ।

गुड़ाम्बु।

गुड़योगात् गुड़ाम्बु स्यात् गुड़वर्णरसान्वितम्॥

वेशवारः।

निरस्थि पिशितं पिष्टं स्विन्नं गुड़घृतान्वितम्।
कृष्णा-मरिचसंयुक्तं वेशवार इति स्मृतः।

काञ्जिकम्—अम्लमूलकञ्च।

काञ्जिकं व्युषितं पक्वं मूलकं त्वम्लमूलकम्॥

कट्वरम्।

दध्नः ससारकस्यात्र तक्रं कट्वरमिष्यते।
तक्रं ह्युदश्विन्मथितं पादाम्ब्वर्द्धाम्बु निर्जलम्॥

दधिकूर्चिका-तक्रकूर्चिका।

दध्ना सह पयः पक्वं सा भवेद्दधिकूर्चिका।
तक्रेण पक्वं यत् क्षीरं सा भवेत्तक्रकूर्चिका॥

शुक्तम्।

कन्दमूलफलादीनि सस्नेहलवणानि च।
यत्र द्रव्येऽभिषूयन्ते तच्छुक्तमभिधीयते॥

शीधुः, आसव, मैरेयम्।

शीधुरिक्षुरसैः पक्वैरपक्वैरासवो भवेत्।
मैरेयं धातकीपुष्पं गुड़धान्याम्लसंहितम्॥

आरनालम्।

आरनालन्तु गोधूमैरामैः स्यान्निस्तुषीकृतैः।
पक्वैर्वा सन्धितैस्तत्तु सौवीरसदृशं गुणैः॥

अम्लवटकाः।

मन्थनी नूतना धार्य्या कटुतैलेन लेपिता।
निर्मलेनाम्बुनापूर्य्य तस्याञ्चूर्णं विनिक्षिपेत्॥
राजिकाजीरलवणहिङ्गुशुण्ठीनिशाकृतम्।

निक्षिपेद्वटकांस्तत्र भाण्डस्यास्यञ्च मुद्रयेत् ॥
ततो दिनत्रयादूर्द्ध्वमम्लाः स्युर्वटका ध्रुवम् ॥

कृशरा त्रिशरा वा ।

तिलतण्डुलमाषैश्च कृशरा त्रिशरेति सा ॥

स्वल्पचुक्रम् ।

यन्मस्त्वादिशुची भाण्डे सगुड़क्षौद्रकाञ्जिकम् ।
धान्यराशौ त्रिरात्रस्थं स्वल्पचुक्रं तदुच्यते ॥

आसवारिष्टयोर्लक्षणम् ।

यदपक्वौषधाम्बुभ्यां सिद्धं मद्यं स आसवः ।
अरिष्टः क्वाथसिद्धः स्यात् सम्यक्वो मधुरद्रवैः ॥

शीधुमाह ।

आम्रुतश्चापि शीधुः स्यादित्याहुस्तद्विदो जनाः ।
आस्रुत इति सम्यक् पक्वः ।

सुरायाः प्रकारभेदे नामानि ।

सुरामण्डः प्रसन्ना स्यात् ततः कादम्बरी घना ।
तदधो जगलो ज्ञेयो मेदको जगलाद्‌घनः ॥
वक्कसो हृतसारः स्यात् सुरावीजञ्च किण्वकम् ।

वारुणी ।

यत्तालखर्ज्जूररसैः सन्धिता सैव वारुणी ॥

गुड़ेक्षुमृद्वीकाशुक्तानि ।

गुड़ाम्बुना सतैलेन कन्दशाकफलैस्तथा ।
आस्रुतं चाम्लतां जातं गुड़शुक्तं तदुच्यते ॥
एवमेवेक्षुशुक्तं स्यात् मृद्वीकासम्भवं तथा ॥

तुषाम्बु-सौवीरादीनि ।

तुषाम्बु चास्रुतं ज्ञेयमामैर्विदलितैर्यवैः ॥
सुनिस्तुषैश्च पक्वैश्च सौवीरं चास्रुतं भवेत् ।

कुल्माषो धान्यमण्डेन चाम्भृतं काञ्जिकं भवेत् ॥

अन्यत् यदाह चरकः।

तुषोदकम्।

भृष्टाम्माषतुषान् सिद्धान् यवचूर्णसमन्वितान्।
आम्भृतानम्भसा तद्वज्जातं तच्च तुषोदकम् ॥

काञ्जिकम्।

आशुधान्यं चोदितञ्च बालमूलन्तु खण्डशः।
कृतं प्रस्थमितं पात्रे जलं तत्राढ़कं क्षिपेत् ॥
तावत् सन्धीय संरक्षेत् यावत् अम्लत्वमागतम्।
काञ्जिकं तत्तु विज्ञेयमेतत् सर्वत्र पूजितम् ॥

शिण्डाकी।

शिण्डाकी चाम्भृता ज्ञेया मूलकैः सर्षपादिभिः।

मधुशुक्तम्।

जम्बीरस्वरसप्रस्थं मधुनः कुड़वं तथा ॥
तावच्च पिप्पलीमूलादिकीकृत्य घटे क्षिपेत्।
धान्यराशौ स्थितं मासं मधुशुक्तं तदुच्यते ॥

खडयूषकाम्बलिकयोर्लक्षणम्।

तक्रं कपित्थचाङ्गेरी मरिचाजाजिचित्रकैः।
सुपक्वः खड़यूषोऽयमयं काम्बलिकोऽपरः ॥

तर्पणम्।

दध्यम्ललवणस्नेह-तिलमाषसमन्वितः।
संज्ञा प्रमथ्या विहिता योगे दीपनपाचने ॥
द्रवेणालोड़ितास्ते स्युस्तर्पणं लाजशक्तवः।

मन्थः।

शक्तवः सर्पिषा युक्ताः शीतवारिपरिप्लुताः ॥
नात्यच्छा नातिसान्द्राश्च मन्थ इत्यभिधीयते।

उष्णोदकम्।

क्वाथ्यमानन्तु यत्तोयं निष्फेनं निर्म्मलीकृतम्॥
भवत्यर्द्धावशिष्टन्तु तदुष्णोदकमिष्यते।

भेषजनामानि।

चिकित्सितं व्याधिहरं पथ्यं साधनमौषधम्॥
प्रायश्चित्तं प्रशमनं प्रकृतिस्थापनं हितम्।
विद्याद्भेषजनामानि तच्चापि द्विविधं स्मृतम्॥
सुस्थस्यौजस्करं किञ्चित् किञ्चिदार्त्तस्य रोगनुत्॥

इति परिभाषाप्रदीपे तृतीयः खण्डः।

---

## चतुर्थः खण्डः।

अथ पञ्चकर्म्माण्याह।

दोषाः कदाचित् कुप्यन्ति जिताः कालेन पाचनैः।
ये तु संशोधनैः शुद्धा न तेषां पुनरुद्भवः॥
पाचनैरिति लङ्घनपाचनादिभिर्दोषहारिभिरित्यर्थः॥
वमनं रेचनं नस्यं निरूहश्चानुवासनम्।
ज्ञेयं पञ्चविधं कर्म्म मात्रा तस्य प्रयुज्यते॥
यदा वहेद् वहिर्दोषान् पञ्चधा शोधनं हि तत्॥
न नस्यं न्यूनसप्ताब्दे नातीताशीतिवत्सरे।
न चोनद्वादशे धूमः कवलो नोनपञ्चमे।
न शुद्धिरूनदशमे न चातिक्रान्तसप्ततौ॥
न न्यूनषोड़शातीतसप्ततौ रक्तमोक्षणम्।
आजन्ममरणात् शस्तः प्रतिमर्षस्तु सर्वदा॥

## तत्रादौ वमनमाह ।

पूर्वाह्णे पाययेत् पीतं जानुतुल्यासने स्थितः ।
तन्मना जातहृल्लास-प्रसेकश्छर्दयेत् ततः ॥

चरकस्त्वाह ।

माधवप्रथमे मासि नभस्य प्रथमे पुनः ।
सहस्य प्रथमे चैव वाहयेद्दोषसञ्चयम् ॥

माधवप्रथमे मासीति वैशाखप्रथमे भागे, भाद्रस्य प्रथमे, पौषस्य प्रथमे च दोषसञ्चयं दोषाणां सञ्चयं उपचयं वाहयेत् सारयेदित्यर्थः ॥

अन्यच्च ।

मधौ सहे च नभसि मासि दोषांस्तु वाहयेत् ॥

मधौ चैत्रे मासि, सहे अग्रहायणे, नभसि श्रावणे दोषान् वाहयेदित्यर्थः ॥

प्रत्युष्णवर्षशीता हि ग्रीष्मवर्षहिमागमाः ।
औषधस्य शरीरस्य ते भवन्ति विकल्पकाः ॥

विकल्पका इति विरुद्धकार्य्यजनकाः ॥

उपयुक्तकालमाह ।

प्रावृट् शुचिनभौ ज्ञेयौ शरदूर्जसहौ पुनः ।
फाल्गुनश्च मधुश्चैव वसन्तः शोधनं प्रति ॥
सुस्थवृत्तिमभिप्रेत्य व्याधौ व्याधिवशेन तु ॥

क्रमात् कफः पित्तमथानिलश्च यस्यैति सम्यग्वमितः स इष्टः ।
हृत्पार्श्वमूर्द्धेन्द्रियमार्गशुद्धौ तनोर्लघुत्वेऽपि च लक्ष्यमाणे ॥

आमाशयस्थः कफस्तस्मात् कफस्तुल्या तस्य प्रथमोल्लेखः । ततस्तदधः पित्ताशयस्तस्मात् पित्तं, पक्वाशयस्तादधस्ततोऽनिलः, एति गच्छति, क्रमादित्यनुक्रमात् ॥

कफप्रसेक-स्वरभेद-तन्द्रा-निद्रास्य-दौर्गन्ध्यविषोपसर्गाः ।
गुरुत्वकासग्रहणीप्रदोषा न सन्ति जन्तोर्वमतः कदाचित् ॥

असम्यग्वमिते दोषमाह ।

दुश्छर्दिते स्फोटककोठकण्डू-हृत्खाविशुद्धिर्गुरुगात्रता च ॥

खमिन्द्रियम् अतः सर्वेन्द्रियस्याविशुद्धित्वं सामान्यात् । हृत् हृदयम्, एतयोरविशुद्धिरित्यर्थः ॥

अतिवमिते दोषमाह ।

तृण्मोहमूर्च्छानिलकोपनिद्रा बलातिहानिं वमितेऽति विद्यात् ॥

सुस्थवृत्तिमभिप्रेत्य व्याधौ व्याधिवशेन तु ।
कृत्वा शीतोष्णवृष्टीनां प्रतीकारं यथायथम् ॥
प्रयोजयेत् क्रियां प्राप्तां क्रियाकालं न हापयेत् ।

अथ वमनभेषजमात्रामाह ।

क्वाथ्यद्रव्यस्य कुडवं श्रपयित्वा जलाढके ।
चतुर्भागावशिष्टन्तु वमनेष्ववतारयेत् ॥
क्वाथ्यद्रव्यपले वारि प्रस्थार्द्धं पादशेषितम् ।
कर्षं प्रदाय कल्कस्य मधुसैन्धवयोस्तथा ॥
सुखोष्णं वितरेद्वान्तौ मधूष्णं स्यान्न दोषकृत् ।
प्रच्छर्दने निरूहे च मधूष्णं न विरुध्यति ॥
अलब्धपाकमाश्वेव तयोर्यस्मान्निवर्त्तयेत् ।
यात्यधो दोषमादाय पच्यमानं विरेचनम् ॥
गुणोत्कर्षात् तु यात्यूर्द्ध्वमपक्वं वमनं पुनः ॥

तयोरिति वमनविरेकयोः पक्वापक्वयोरित्यन्वयः ॥

वमननिषेधमाह ।

न वामयेत्तैमिरिकं न गुल्मिनं न चापि पाण्डूदररोगपीड़ितान् ।
स्थूलक्षतक्षीणकृशातिवृद्धानर्शोऽर्दिताक्षेपकपीड़ितांश्च ॥

रूक्षे प्रमेहे तरुणे च गर्भे गच्छत्यथोर्द्धं रुधिरे च तीव्रे।
दुष्टे च कोष्ठे क्रिमिभिर्मनुष्यं न वामयेदर्चसि चातिवृद्धे॥
एतेऽप्यजीर्णव्यथिता वम्या ये च विषातुराः।
अत्युल्वणकफा ये च ते च स्युर्मधुकाम्बुना॥
तैमिरिकादयोऽपि एतादृश्यवस्थायाम् वम्या इति शेषः॥
मन्दाग्निर्वेदना मन्दा गुरुस्तिमितकोष्ठता।
सोत्क्लेशश्चारुचिर्यस्य स गुल्मी वमनोपगः॥
अन्यच्च।
शरत्काले वसन्ते च प्रावृट्काले च देहिनाम्।
वमनं रेचनञ्चैव कारयेत् कुशलो भिषक॥
बलवन्तं कफव्याप्तं हृल्लासादिनिपीड़ितम्।
तथा वमनसात्म्यञ्च धीरचित्तञ्च वामयेत्॥
विषदोषे स्तन्यरोगे मन्देऽग्नौ श्लीपदेऽर्वुदे।
विसर्पकुष्ठहृद्रोग-मेहाजीर्णभ्रमेषु च॥
विदारिकापची-कास-श्वास-पीनसवृद्धिषु।
अपस्मारे ज्वरोन्मादे तथा रक्तातिसारिषु॥
नासाताल्वोष्ठपाकेषु कर्णस्रावेऽधिजिह्वके।
गलगण्डेऽतीसारे च पित्तश्लेष्मगदे तथा।
मेदोगदेऽरुचौ चैव वमनं कारयेद्भिषक्॥
न वामनीयस्तिमिरी न गुल्मी नोदरी कृशः।
नातिवृद्धो गर्भिणी च न स्थूलो न क्षतातुरः॥
मदार्त्तो बालको रूक्षः क्षुधितश्च निरूहितः।
उदावर्त्तोर्द्धरक्ती च दुश्छर्द्यः केवलानिलो॥
पाण्डुरोगी क्रिमिव्याप्तः पठनात् स्वरघातकः।
एतेऽप्यजीर्णव्यथिता वम्या ये विषपीड़िताः।
कफव्याप्ताश्च ते वम्या मधुक्वाथस्य पानतः॥

ग्रन्थान्तरस्थान्यां रसमात्रामाह।

क्वाथपाने नवप्रस्था ज्येष्ठा मात्रा प्रकीर्त्तिता।
मध्यमा षण्मिता प्रोक्ता त्रिप्रस्था च कनीयसी॥

प्रसङ्गादन्यौषधानाञ्च मात्रामाह।

कल्कचूर्णावलेहानां त्रिपलं श्रेष्ठमात्रया।
मध्यमं द्विपलं दद्यात् कनीयस्कं पलं भवेत्॥
वमने चापि वेगाः स्युरष्टौ पित्तान्ता उत्तमाः।
षड्वेगा मध्यमा वेगाश्चत्वारोऽप्यवरा मताः॥
कफं कटुकतीक्ष्णोष्णैः पित्तं स्वादुहिमैर्ज्जयेत्।
सुस्वादुलवणोष्णैश्च संसृष्टं वायुना कफम्॥

इति वमनम्।

## अथ विरेचनमाह।

शार्ङ्गधरः।

स्निग्धस्विन्नस्य वान्तस्य दद्यात् सम्यक् विरेचनम्॥

अस्य गुणमाह सुश्रुतः।

बुद्धेः प्रसादं बलमिन्द्रियाणां धातुस्थिरत्वं ज्वलनातिदीप्तिम्।
चिराच्च पाकं वपुषः करोति विरेचनं सम्यगुपास्यमानम्॥
अवान्तस्य त्वधःस्रस्तो ग्रहणीं छादयेत् कफः।
मन्दाग्निं गौरवं कुर्य्याज्जनयेद्वा प्रवाहिकाम्॥

ग्रहणी अग्निवहा धमनी, तात्स्थ्यादग्निमाहुः; तां छादयेदिति शेषः॥

अथवा पाचनैरामं बलासञ्च विपाचयेत्।
स्निग्धस्य स्नेहनैः कार्य्यं स्वेदैः स्विन्नस्य रेचनम्।
शरदृतौ वसन्ते च देहशुद्धै विशेषतः॥

विरेकनिषेधमाह ।

बालवृद्धावतिस्निग्धः क्षतक्षीणो भयार्द्दितः ।
श्रान्तस्तृषार्त्तः स्थूलश्च गर्भिणी च नवज्वरी ॥
नवप्रसूता नारी च मन्दाग्निश्च मदात्ययी ।
शल्यार्द्दितश्च रूक्षश्च न विरेच्यो भिषग्वरैः ॥

विरेच्यमाह ।

जीर्णज्वरी गरव्याप्तो वातरक्ती भगन्दरी ।
अर्शः-पाण्डूदरग्रन्थि-हृद्रोगाऽरुचिपीड़िताः ॥
योनिरोगप्रमेहार्त्त-गुल्मप्लीहव्रणार्दिताः ।
विद्रधिच्छर्दिविस्फोट-विसूचीकुष्ठसंयुताः ॥
कर्णनासाशिरोवक्त्र-गुदमेढ्रामयार्दिताः ।
प्लीहशोथाक्षिरोगार्त्ताः क्रिमिरोगानिलार्द्दिताः ॥
शूलिनो मूत्राघातार्त्ता विरेकार्हा नरा मताः ॥
बहुपित्तो मृदुः प्रोक्तो बहुश्लेष्मा च मध्यमः ।
बहुवातः क्रूरकोष्ठो दुर्विरेच्यः स कथ्यते ॥

तस्य मात्रामाह ।

मात्रोत्तमा विरेकस्य त्रिंशद्वेगैः कफान्तकम् ।
वेगैर्विंशतिभिर्मध्या हीनोक्ता दशवेगकैः ॥
द्विपलं श्रेष्ठमाख्यातं मध्यमञ्च पलं भवेत् ।
पलार्द्धञ्च कषायाणां कनीयस्त्तु विरेचनम् ॥

आनन्दसेनस्त्वाह ।

पित्तेन स्यान्मृदुः कोष्ठः क्रूरो वातकफाश्रयात् ।
मध्यमः समदोषः स्यात् मात्रा योज्यानुरूपतः ॥
पलन्तु श्रेष्ठमाख्यातं मध्यन्त्वर्द्धपलं भवेत् ।
कर्षमानं कनीयः स्यात् ज्ञेयं श्रेष्ठाद्यपेक्षया

वमनविरेकयोश्चतुर्द्धा विशुद्धिमाह ।

वैनिकी मानिकी चापि अन्तकी लैङ्गिकी तथा ।
चतुर्विधा शुद्धिरुक्ता वमने च विरेचने ॥

जघन्यमध्यप्रवरे तु वेगाश्चत्वार इष्टा वमने षड़ष्टौ ।
दशैव ते द्वित्रिगुणा विरेके प्रस्थस्तथा द्वित्रिचतुर्गुणाश्च ॥

वमने च विरेके च तथा शोणितमोक्षणे ।
सार्द्धत्रयोदशपलं प्रस्थमाहुर्मनीषिणः ॥
पित्तान्तमिष्टं वमनं कफान्तञ्च विरेचनम् ॥

जघन्यमिति जघन्ये वमने चत्वारो वेगाः, मध्यमे षड़्वेगाः, प्रवरेऽष्टवेगाः । तथा च जघन्यविरेके दश वेगाः, मध्यमे विरेके दशद्विगुणा विंशतिरित्यर्थः । प्रवरे श्रेष्ठे विरेके दशत्रिगुणा त्रिंशद्वेगा इत्यर्थः । विरेके दोषमानेनापि जघन्यादित्वमाहुः ; प्रस्थ इत्यादि—द्विगुणः प्रस्थो जघन्ये, त्रिगुणो मध्यमे, चतुर्गुणः प्रवरे इत्यर्थः । पित्तान्तमिति आत्यन्तिकी शुद्धिर्विरेकार्द्धभेषजमात्रया कार्य्या, विरेके यत् प्रस्थादिना जघन्यत्वमुक्तं तदर्द्धपरिमाणेन जघन्यादित्वमपरं वमने ज्ञेयम् । कफान्तमिति अतिरेकेणाऽऽत्यन्तिकी शुद्धिरुक्ता ।

विरेकमाह ।

द्वित्रान् सविट्‌कानपनीय वेगान् मेयं विरेके वमने तु पीतम् ।
क्रमात् कफः पित्तमथानिलश्च यस्यैति सम्यग्वमितः स इष्टः ॥

विरेके द्वित्रान् सविट्‌कान् वेगान् अपनीय त्यक्त्वा मेयं गणनीयं परिमाणं कार्य्यं, विरेकसंख्या कर्त्तव्येत्यर्थः । तथा वमने पीतं औषधमपनीयमानं कर्त्तव्यं, वेगानामित्यर्थः । विरेक इति । पूर्वदिनाहारमलविरेकात् प्रथमतः वेगद्वयं त्रयं वा परिहृत्य संख्या कर्त्तव्या इति । वमनेऽपि पीतमौषधं प्रथम-

वेगेन वह्निर्निःसरति, अतस्तन्न गणनीयमतोऽनन्तरं संख्या कार्य्येति दिक् ।

हृत्पार्श्वमूर्द्धेन्द्रियमार्गशुद्धौ तनोर्लघुत्वेऽपि च लक्ष्यमाणे ॥
स्रोतोविशुद्धौन्द्रियसम्प्रसादौ लघुत्वमूर्ज्जोऽग्निरनामयत्वम् ।
प्राप्तिश्च विट्पित्तकफानिलानां सम्यग्विरिक्तस्य भवेत् क्रमेण ॥

प्राप्तिरिति प्रवृत्तिरित्यर्थः ।

स्यात् श्लेष्मपित्तानिलसंप्रकोपः सादस्तथाग्नेर्गुरुता प्रतिश्या ।
तन्द्रा तथा छर्दिररोचकश्च वातानुलोम्यं न च दुर्विरिक्ते ॥
कफास्रपित्तक्षयजानिलोत्थाः सुप्त्यङ्गमर्द्दक्लमवेपनाद्याः ।
निद्राबलाभावतमःप्रवेशाः सोन्मादहिक्काश्च विरेचितेऽति ॥

विरेकनिषेधमाह ।

क्षीणः क्षतोरःक्षतबालवृद्धा दीनोऽथ शोषी भयशोकतप्तः ।
श्रान्तस्तृषार्त्तोऽपरिजीर्णभक्तो गर्भिण्यधोगच्छति यस्य चासृक् ॥
नवप्रतिश्यायपरीतदेहो नवज्वरी या च नवप्रसूता ।
कषायनिष्ठा न विरेचनीयाः स्नेहादिभिर्ये त्वनुपस्कृताश्च ॥
विरेचनैर्यान्ति नरा विनाशमज्ञप्रयुक्तैरविरेचनीयाः ।
अत्यर्थपित्ताभिपरीतदेहान् विरेचयेत्तानपि मन्दमन्दम् ॥

इति विरेचनम् ।

## अथ नस्यमाह ।

नस्यभेदो द्विधा प्रोक्तो रेचनं स्नेहनं तथा ।
रेचनं कर्षणं प्रोक्तं स्नेहनं बृंहणं मतम् ॥
नस्यं तत् कथ्यते धीरैर्नासाग्राह्यं यदौषधम् ।
नावनं नस्तकर्मेति तस्य नामद्वयं मतम् ॥

रेचनं कफादीनामित्यर्थः ।

कफपित्तानिलध्वंसे पूर्वे मध्येऽपराह्णिके ।
दिनस्य गृह्यते नस्यं रात्रावप्युत्कटे गदे ॥

अन्यच्च ।

प्रतिमर्षोऽवपीड़श्च नस्यं प्रधमनं तथा ।
शिरोविरेचनञ्चैव नस्तकर्म्म तु पञ्चधा ॥
ईषदुच्छिङ्घनात् स्नेहो यावद्वक्त्रं प्रपद्यते ।
नस्तो निषिक्तस्तं विद्यात् प्रतिमर्षं प्रमाणतः ।
प्रतिमर्षञ्च नस्यार्थं करोति न च दोषवान्
शोधनः स्तम्भनस्तस्मादवपीड़ो द्विधा मतः ।
आपीड्य दीयते यस्मादवपीड़स्ततः स्मृतः ॥
स्नेहार्थं शून्यशिरसां ग्रीवास्कन्धोरसां तथा ।
बलार्थं दीयते स्नेहो नस्तः सर्वत्र वर्त्तते ॥

अन्यच्च ।

अवपीड़ः प्रधमनं द्वौ भेदावपरौ स्मृतौ ।
शिरोविरेचनस्यार्थे तौ तु देयौ यथायथम् ॥
कल्कीकृतादौषधाद् यः पीड़ितो निःसृतो (क) रसः ।
सोऽवपीड़ः समुद्दिष्टः तीक्ष्णद्रव्यसमुद्भवः ॥
षड़ङ्गुला द्विवक्त्रा या नाड़ी चूर्णं तया धमेत् ।
तीक्ष्णं कोलमितं वक्त्रवातैः प्रधमनं स्मृतम् ॥
ऊर्द्ध्वजत्रुगते रोगे कफजे च स्वरक्षये ।
अरोचके प्रतिश्याये शिरःशूले च पीनसे ।
शोथापस्मारकुष्ठेषु नस्यं वैरेचनं हितम् ॥
भीरुस्त्रीकृशबालानां नस्यं स्नेहेन शस्यते ।
गलरोगे सन्निपाते निद्रायां सविषे ज्वरे ।
मनोविकारे क्रिमिषु युज्यते चावपीड़नम् ॥
अत्यन्तोत्कटदोषेषु विसंज्ञेषु च दीयते ।

(क) निःसृत इति पाठान्तरम् ।

चूर्णं प्रधमनं धीरैस्तद्धि तीक्ष्णतरं यतः ॥
नस्यस्य स्नैहिकस्यात्र देयास्त्वष्टौ च विन्दवः ।
प्रत्येकशो नस्तकर्म नृणामिति विनिश्चयः ॥
अष्टवर्षस्य बालस्य नस्तकर्म समाचरेत् ।
अशीतिवर्षादूर्द्धञ्च नावनं नैव दीयते ॥

निषेधमाह ।

तथा नवप्रतिश्यायी गर्भिणी गरदूषितः ।
अजीर्णी दत्तवस्तिश्च पीतस्नेहोदकासवः ॥
क्रुद्धः शोकाभितप्तश्च तृषार्त्तो वृद्धबालकौ ।
वेगावरोधी स्नातश्च शान्तकामश्च (क) वर्जयेत् ॥

इति नस्यम् ॥

## अथानुवासनमाह ।

भवेत् सुखोष्णश्च तथा निरेति सहसा सुखम् ।
विरिक्तस्त्वनुवास्यः स्यात् सप्तरात्रात्परं तदा ॥

अन्यत्रचोक्तम् ।

विरिचनात् सप्तरात्रे गते जातबलाय वै ।
कृताहाराय सायाह्ने वस्तिर्ज्ञेयोऽनुवासनः ॥

अनुदिनं दीयते इत्यनुवासनः ।

सुवर्ण-रौप्य-त्रपु-ताम्र-रीति-कांस्यायसास्थिद्रुमवेणुदन्तैः ।
नलैर्विषाणैर्मणिभिस्तु तैस्तैः कार्य्याणि नेत्राणि सुकर्णिकानि ॥
षड्‌द्वादशाष्टाङ्गुलसम्मितानि षड्‌विंशतिद्वादशवर्षजानाम् ।
स्युर्मुद्ग-कर्कन्धु-सतीनवाहि छिद्राणि वस्तैः पिहितानि चापि ॥
यथावयोऽङ्गुष्ठकनिष्ठकाभ्यां मूलाग्रयोः स्युः परिणाहवन्ति ।
ऋजूनि गोपुच्छसमाकृतीनि श्लक्ष्णानि च स्युर्गुड़िकामुखानि ॥

(क) अत्र "श्रान्तकामः" "स्नातुकामः" इति पाठद्वयमप्यवलोक्यते ।

स्यात् कर्णिकैकाग्रचतुर्थभागे मूलाश्रिते वस्तिनिबन्धने द्वे ॥
जारद्गवो माहिषहारिणौ वा स्यात् शौकरो वस्तिरजस्य वापि ।
दृढ़स्तनुर्नष्टशिरोविगन्धः कषायरक्तश्च मृदुः सुशुद्धः ॥
नृणां वयो वीच्य यथानुरूपं नेत्रेषु योज्यस्तु सुबद्धसूत्रः ॥

व्रणवस्तेस्तु नेत्रं स्यात् श्लक्ष्णमष्टाङ्गुलोन्मितम् ।
मृदुच्छिद्रं (क) गृध्रपक्ष-नलिकापरिणाहि च ॥
नेत्रं कार्य्यं सुवर्णादि धातुभिर्वृक्षवेणुभिः ।
नलैर्दन्तैर्विषाणाग्रैर्मणिभिर्वा विधीयते ॥
एकवर्षात्तु षड़्वर्षं यावन्मात्रा षड़ङ्गुलम् ।
ततो द्वादशकं यावत् मानं स्यादष्टसम्मितम् ॥
ततः परं द्वादशभिरङ्गुलैर्नेत्रदीर्घता ।
मुद्गच्छिद्रं कलायास्यं छिद्रं कोलास्थिरन्ध्रकम् ॥
यथासंख्यं भवेन्नेत्रं श्लक्ष्णं गोपुच्छसन्निभम् ।
आतुराङ्गुष्ठमानेन मूले स्थूलं विधीयते ॥
कनिष्ठिका परीणाहमग्रे च गुड़िकामुखम् ।
तन्मूले कर्णिके द्वे च कार्य्ये भागाच्चतुर्थकात् ।
योजयेत्तत्र वस्तिस्तु बन्धद्वयविधानतः ॥
मृगाजशूकरगवां महिषस्यापि वा भवेत् ।
मूत्रकोषस्य वस्तिस्तु तदलाभेन चर्म्मजः ।
कषायरक्तः स मृदुर्वस्तिः स्निग्धो दृढ़ो हितः ॥

अन्यच्च ।

वस्तिस्तु (ख) चीरतैलैर्यो निरूहः स निगद्यते ।
वस्तिभिर्दीयते यस्मात् तस्माद्वस्तिरिति स्मृतः ॥

---

(क) मृदुच्छिद्रमित्यत्र मुखच्छिद्रमिति पाठान्तरम् ।

(ख) वस्तिस्त्वित्यत्र कषायेत्यपरः पाठः ।

तत्रानुवासनाख्यो हि वस्तिर्यः सोऽत्र कथ्यते ।
पूर्वमेव ततो वस्तिर्निरूहाख्यो भविष्यति ॥
निरूहादुत्तरश्चैव वस्तिः स्यादुत्तराभिधः ॥
अनुवासनभेदश्च मात्रावस्तिरुदीरितः ॥
पलद्वयं तस्य मात्रा तस्मादर्द्धोऽपि वा भवेत् ।
अनुवास्यस्तु रूक्षः स्यात्तीक्ष्णाग्निः केवलानिली ॥
नानुवास्यस्तु कुष्ठी स्यान्मेही स्थूलस्तथोदरी ।
नास्थाप्या नानुवास्याः स्युरजीर्णोन्मादतृड्युताः ।
शोथमूर्च्छाऽरुचिभय-श्वासकासक्षयातुराः ॥
शरीरोपचयं वर्णं बलमारोग्यमायुषः ।
कुरुते परिवृद्धिञ्च वस्तिः सम्यगुपासितः ॥
दिवा शीते वसन्ते च स्नेहवस्तिः प्रदीयते ।
ग्रीष्मवर्षाशरत्काले रात्रौ स्यादनुवासनः ॥
न चातिस्निग्धमशनं भोजयित्वानुवासयेत् ।
मदमूर्च्छाञ्च जनयेद् द्विधा स्नेहः प्रयोजितः ॥
हीनमात्रावुभौ वस्ती नातिकार्य्यकरौ स्मृतौ ।
अतिमात्रौ तथानाहक्लमातीसारकारकौ ॥
उत्तमस्य पलैः षड्भिः मध्यमस्य पलैस्त्रिभिः ।
पलैकार्द्धेन हीना स्यादुक्ता मात्रानुवासने ॥

अन्यच्च ।

निरूहमात्रा प्रथमे प्रकुञ्चो वत्सरे परम् ।
प्रकुञ्चवृद्धिः प्रत्यब्दं यावत् षट्प्रसृतास्ततः ॥
प्रसृतं वर्द्धयेदूर्द्धं द्वादशाष्टादशस्य तु ।
आसप्ततेरिदं मानं दशैव प्रसृताः परम् ॥
यथायथं निरूहस्य पादो मात्रानुवासने ।
सानिलः सपुरीषश्च स्नेहः प्राप्नोति यस्य वै ॥

विना पीड़ां त्रियामस्थः स सम्यगनुवासितः ।
विष्टब्धानिलविरमूत्रः स्नेहहीनेऽनुवासने ।
दाहक्लमपिपासार्त्ति-करश्चात्यनुवासने ॥
स्नेहात्पित्तकफोत्क्लेदौ (क) निरूहात् पवनाद्भयम् ।
स्नेहवस्तिं निरूहं वा नैकमेवातिशीलयेत् ॥
अनास्थाप्या येऽभिधेया नानुवास्याश्च ते मताः ।
विशेषतस्त्वमी-पाण्डु-कामला-मेह-पीनसाः ॥
निरन्नप्लीहविड्भेदी गुरुकोष्ठकफोदराः ।
अभिष्यन्दभृशस्थूल-क्रिमिकोष्ठाढ्यमारुतः ॥
पीते विषे गरेऽपच्यां श्लीपदी गलगण्डवान् ॥
अनास्थाप्यास्त्वतिस्निग्धः चतोरस्को भृशं कृशः ।
आमातिसारी वमिवान् संशुद्धो दत्तनावनः ॥
श्वासकासप्रसेकार्शो-हिक्काध्मानाल्पवह्नयः ।
पायुशूलः कृताहारो बद्धच्छिद्रो दकोदरी ।
कुष्ठी च मधुमेही च मासान् सप्त च गर्भिणी ॥
न चैकान्तेन निर्द्दिष्टे कुर्य्यादभिनिवेशनम् ।
भवेत् कदाचित् कार्य्यापि विरुद्धाऽभिमता क्रिया ॥
छर्द्दि-हृद्रोग-गुल्मार्त्तौ वमनं स्वे चिकित्सिते ।
अवस्थां प्राप्य निर्द्दिष्टं वस्तिकर्म्म च योजयेत् ॥

इत्यनुवासनः ।

## अथ निरूहमाह ।

अनुवास्य स्निग्धतरं (ख) तृतीयेऽह्नि निरूहयेत् ।
मध्याह्ने किञ्चिदावृत्ते प्रयुक्ते बलिमङ्गले ॥

---

(क) "क्लेदौ" इत्यत्र "क्लेशः" इति पाठान्तरम् ।

(ख) अत्र स्निग्धतनुमित्यन्यतरः पाठः ।

अभ्यक्त स्वेदितोत्सृष्टमलं नातिबुभुक्षितम् ॥

किञ्चिदावृत्त इत्यल्पस्खलिते ।

तृतीयेऽह्नि प्रायोवादात् पञ्चमेऽप्यह्नि क्रियते ।

यदाह वाग्भटः ।

पञ्चमेऽथ तृतीये वा दिवसे साधके शुभे ।

निरूहयेदिति दोषं निर्हरेदित्यर्थः । अतएवाह सुश्रुतः । यथा,—दोषहरणाच्छरीररोहणाद्वा निरूह इति । अस्यास्थापनमित्यपि नाम । वयःस्थापनादायुःस्थापनाद्वा आस्थापनमिति सुश्रुत एव ।

पश्चाद्विरिक्तो वान्तस्य ततः पश्चात् निरूहणम् ।
सद्योनिरूढ़ोऽनुवास्यः सप्तरात्राद्विरेचितः ॥
मधुस्नेहनकल्काख्यः कषायावापतः क्रमात् ।
त्रीणि षट् द्वे दश त्रीणि पलान्यनिलरोगिषु ॥
पित्ते चत्वारि चत्वारि द्वे द्विपञ्च चतुष्टयम् ।
षट्त्रीणि द्वे दश त्रीणि कफे चापि निरूहणम् ॥

स्नेहनं पक्वस्नेहः आमस्य निषिद्धत्वात्, "न चामं प्रणयेत् स्नेहं स ह्यभिष्यन्दयेद्गुदम्" इति दृढ़बलवचनात् । पक्वस्नेहश्च वातव्याधौ वक्ष्यमाणो नारायणप्रसारणी-सैन्धवादितैलादिकः, एवमनुवासनेऽपि । कल्को मदनफलादिनाम् । कषायो दशमूलादीनां, आवापः काञ्जिक-जम्बीररस-मांसरसादीनाम् । त्रीणि इत्यादि वातरोगे क्रमाद्यथाक्रमं मधुनस्त्रीणि पलानि, स्नेहस्य षट्, कल्कस्य द्वे, कषायस्य दश, त्रीणि च आवाप्यस्य । एवं पित्ते मधुनश्चत्वारि, स्नेहस्य च चत्वारि, कल्कस्य द्वे, कषायस्य द्विपञ्चेति दशेत्यर्थः । आवाप्यस्य च चतुष्टयमिति ; एवं कफे मधुनः षट्पलानीति योज्यम् ॥

शार्ङ्गधरमतमाह ।

निरूहवस्तिर्बहुधा भिद्यते कारणान्तरैः ।
तैरेव तस्य नामानि कृतानि मुनिपुङ्गवैः ॥
निरूहस्यापरं नाम प्रोक्तमास्थापनं बुधैः ।
स्वस्थानस्थापनाद्दोष-धातूनां स्थापनं मतम् ॥
निरूहस्य प्रमाणञ्च प्रस्थं पादोत्तरं परम् ।
मध्यमं प्रस्थमुद्दिष्टं हीनञ्च कुड़वास्त्रयः ॥
अतिस्निग्धोत्क्लिष्टदोषः चतोरस्कः कृशस्तथा ।
आध्मानच्छर्द्दिहिक्कार्शः- कासश्वासप्रपीड़ितः ॥
गुदशोथातीसारार्त्तो विसूचीकुष्ठसंयुतः ।
गर्भिणी मधुमेही च नास्थाप्यश्च जलोदरी ॥
वातव्याधावुदावर्त्ते वातासृग्विषमज्वरे ।
मूर्च्छातृष्णोदरानाह-मूत्रकृच्छ्राश्मरीषु च ॥
वृद्ध्यसृग्दरमन्दाग्नि-प्रमेहेषु निरूहणम् ।
शूलेऽम्लपित्ते हृद्रोगे योजयेद्विधिवद्बुधः ॥
उत्सृष्टानिलविण्मूत्रं स्निग्धं स्विन्नमभोजितम् ।
मध्याह्ने गृहमध्ये तु यथायोग्यं निरूहयेत् ॥
स्नेहवस्तिविधानेन बुधः कुर्य्यान्निरूहणम् ।
जाते निरूहे च ततो भवेदुत्कटुकासनः ।
तिष्ठेन्मुहूर्त्तमात्रन्तु निरूहागमनेच्छया ॥
अनायातं मुहूर्त्तान्ते निरूहं शोधनैर्हरेत् ।
निरूहैरेव मतिमान् चारमूत्राम्लसैन्धवैः ॥

सम्यङ्निरूहस्य लक्षणमाह ।

चिकित्सामृते यथा—

न धावत्यौषधं पाणिं न तिष्ठत्यवलिप्य च ।
न करोति च सीमन्तं स निरूहः सुयोजितः ॥

कल्कस्ने हकषायाणामविवेकाङ्गिपुङ्गवैः ।
वस्तिस्तु कल्कितः प्रोक्तस्तस्यादानं तथार्थकृत् ॥

न धावति न पृथग्भवति, सीमन्तं तैलादिरेखाम् । एतेन मधुस्नेहादीनां अपृथग्भाव इत्युक्तं भवति। अतएवोक्तं कल्केत्यादि ।

पूर्व्वोक्तेन विधानेन गुदे वस्तिं निधापयेत् ।
त्रिंशन्मात्रास्थितो वस्तिस्ततस्तूत्कटुको भवेत् ॥

उत्कटुको भवेदिति वस्तेरागमनाय । उत्कटुकइति उन्नत इति लोके। एतच्च मृदुकोष्ठं प्रतिवेगिनञ्च। अवेगिनं प्रति क्रूरकोष्ठं प्रति यथा ।

यावत् पर्य्येति हस्ताग्रं दक्षिणं जानुमण्डलम् ।
निमिषोन्मेषकालो वा सा मात्रा परिकीर्त्तिता ॥
जानुमण्डलमावेष्ट्य दत्तं दक्षिणपाणिना ।
कृष्टनेत्रच्छटा शब्द-शतं तिष्ठेदवेगवान् ॥

कृष्टनेत्रो वहिष्कृतनलिकः, छटा तुड़ीति ख्याता ।

द्वितीयं वा तृतीयं वा चतुर्थं वा यथार्हतः ।
पुटं प्रदापयेद्वैद्यो बुद्ध्वा रोगबलाबलम् ॥

यथार्हत इति यो यावन्तं पुटमर्हति तस्मै तावन्तं पुटं दापयेदित्यर्थः ।

सम्यङ्निरूढ़लिङ्गे तु प्राप्ते वस्तिं निवारयेत् ॥

अन्यच्च ।

नाभिप्रदेशञ्च कटिञ्च गत्वा कुक्षिं समालोड्य पुनश्च सृष्टम् ।
संस्निह्य कायं सपुरीषदोषः सम्यक् सुखेनैति च यः स वस्तिः ॥
प्रसृष्टविण्मूत्रसमीरणत्वं रुच्यग्निवृद्ध्याशयलाघवानि ।
रोगोपशान्तिः प्रकृतिस्थिता च बलञ्च तत् स्यात् सुनिरूढ़लिङ्गम् ॥

असम्यङ्निरूहलक्षणमाह ।

स्याद् हृक्छिरोरुग्गुदकुक्षिलिङ्गे शोथः प्रतिश्या परिकर्त्तिका च ।
हृल्लासिकामारुतमूत्रसङ्गः श्वासो न सम्यक् च निरूहिते स्यात् ॥

अयोगश्चातियोगश्च निरूहस्य विरेकवत् ।

इति निरूहवस्तिविधिः ।

## अथोत्तरवस्तिमाह ।

यदाह शाङ्गधरः—

अतःपरं प्रवक्ष्यामि वस्तिमुत्तरसंज्ञितम् ।
द्वादशाङ्गुलकं नेत्रं मध्ये च क्षतकर्णिकम् ॥
मालतीपुष्पवृन्ताभं छिद्रं सर्षपनिर्गमम् ।
पञ्चविंशतिवर्षाणामधो मात्रा द्विकार्षिकी ।
तदूर्द्धं पलमात्रा च स्नेहस्योक्ता भिषग्वरैः ॥
अथास्थापनशुद्धस्य तृप्तस्य स्नानभोजनैः ॥
स्थितस्य जानुमात्रेण पीठेऽन्विष्य शलाकया ।
स्निग्धया मेढ्रमार्गेण ततो नेत्रं नियोजयेत् ॥
शनैः शनैर्घृताभ्यक्तं मेढ्ररन्ध्रेऽङ्गुलानि षट् ।
ततोऽवपीड़येद्वस्तिं शनैर्नेत्रञ्च निर्हरेत् ।
ततः प्रत्यागते स्नेहे स्नेहवस्तिक्रमो हितः ॥
स्त्रीणां कनिष्ठिकास्थूलं नेत्रं कुर्य्याद्दशाङ्गुलम् ।
मुद्गप्रवेश्यं योज्यञ्च योन्यन्तश्चतुरङ्गुलम् ॥
द्व्यङ्गुलं मूत्रमार्गे च सूक्ष्मं नेत्रं नियोजयेत् ।
मूत्रकृच्छ्रविकारेषु बालानामेकमङ्गुलम् ॥

यदाह वाग्भटः ।

स्त्रीणामार्त्तवकाले तु योनिर्गृह्णात्यपावृतः ।
विदधीत तदा तस्मादनृतावपि चात्यये ॥
योनिविभ्रंशशूलेषु योनिव्यापदसृग्दरे ॥

शनैर्निष्कम्पमाधेयं सूक्ष्मं नेत्रं विचक्षणैः ।
योनिमार्गेषु नारीणां स्नेहमात्रा द्विपालिकी ॥
मूत्रमार्गे पलोन्माना बालानाञ्च द्विकार्षिकी ॥
उत्तानायै स्त्रियै दद्यादूर्द्ध्वजान्वै विचक्षणः ।
अप्रत्यागच्छति भिषग्वस्तावुत्तरसंज्ञिते ।
भूयोवस्तिर्विधातव्यः संयुक्तैः शोधनैर्गणैः ॥
फलवर्त्तिं निदध्याद् वा योनिमार्गे दृढ़ां भिषक् ।
सूत्रैर्विनिर्म्मितां स्निग्धां शोधनद्रव्यसंयुताम् ॥
दह्यमाने तथा वस्तौ दद्याद्वस्तिं विशारदः ।
क्षीरिवृक्षकषायेण पयसा शीतलेन च ॥
वस्तिः शुक्ररुजः पुंसां स्त्रीणामार्त्तवजां रुजाम् ।
हन्यादुत्तरवस्तिस्तु नोचितो मेहिनां क्वचित् ॥
सम्यग्दत्तस्य लिङ्गानि व्यापदः क्रम एव च ।
वस्तेरुत्तरसंज्ञस्य समानं स्नेहवस्तिना ॥
घृताभ्यक्ता गुदे क्षेप्या स्नक्ष्णा खाङ्गुष्ठसन्निभा ।
मलप्रवर्त्तिनी वर्त्तिः फलवर्त्तिश्च सा स्मृता ॥
आनन्दसेनस्त्वाह ।

वस्तिमात्रा यथा—

अनुवासनभेदश्च मात्रावस्तिरुदीरितः ।
पलार्द्धमुत्तरो वस्तिर्मात्रावस्तिः पलद्वयम् ॥
यापना स्नेहवस्तिश्च द्वावेतौ षट् पलान्वितौ ।
पिच्छावस्तिर्भवेत् प्रस्थः पादोनः (क) कीर्त्तितोऽपरः ॥
यापनावस्तिरिति वातविकारयापनार्थं यो वस्तिरित्यर्थः ।

## अथ धूमपानविधिः ।

धूमः पित्तानिलौ कुर्य्यादवश्यायः कफानिलौ ॥

(क) पादोन इत्यत्र सपाद इति वा पाठः ।

धूमपानगुणमाह ।

गौरवं शिरसः शूलं पीनसोऽर्द्धावभेदकः ।
कर्णाक्षिशूलं कासश्च हिक्काश्वासौ गलग्रहः ॥
दन्तदौर्वल्यमास्रावः श्रोत्रघ्राणाक्षिदोषजः ।
पूतिघ्राणास्यगन्धश्च दन्तशूलमरोचकम् ॥
हनुमन्याग्रहः कण्डूः क्रिमयो मुखपाण्डुता ।
श्लेष्मप्रसेको वैस्वर्य्यं गलगण्डाऽधिजिह्वके ।
खालित्यं पिञ्जरत्वञ्च केशानां पतनं तथा ।
क्षवथुश्चातितन्द्रा च वुद्धेर्मोहोऽतिनिद्रता ।
धूमपानात् प्रशाम्यन्ति वलं भवति चाधिकम् ॥
रक्तपित्तान्ध्यवाधिर्य्य-तृणमूर्च्छामदमोहकृत् ।
धूमोऽकालेऽतिपीतो वा तत्र शीतो विधिर्मतः ॥
प्रायोगिकः स्नैहिकश्च वैरेचनिक एव च ।
कासहारी वामनीयो धूमः पञ्चविधो मतः ॥

प्रायोगिकः प्रयोगः सुस्थस्य, स्नेहकारी स्नैहिकः। दोष-विरेचनात् वैरेचनिकः। कण्टकार्य्यादिभिर्धूमपानात् कास-हरः। वमनकारी वामनीयः।

वक्त्रेणैव वमेद्धूमं नस्तो वक्त्रेण वा पिवन् ।
उरःकण्ठगते दोषे वक्त्रेण धूममापिवेत् ।
नासया तु पिवेद्दोषे शिरोघ्राणाक्षिसंश्रये ॥
गन्धैरकुष्ठतगरैर्व्वर्त्तिः प्रायोगिकी मता ।
स्नैहिके तु मधूच्छिष्ट-स्नेहगुग्गुलुसर्ज्जकैः ॥
शिरोविरेचनद्रव्यैर्व्वर्त्तिर्व्वैरेचने मता ।
कासघ्नैरेव कासघ्नो वामनैर्व्वामनो मता ॥

निषेधमाह ।

योज्यं न पित्तरक्तार्त्ति-विरिक्तोदरमेहिषु ।

तिमिरोर्द्धानिलाध्मान-रोहिणी-दत्तवस्तिषु ।
मत्स्यमद्यदधिक्षौद्र-क्षीरस्नेहविषाग्निषु ।
शिरस्यऽभिहते पाण्डुरोगे जागरिते निशि ॥

रोहिणी कण्ठरोहिणी। अाग्निष्विति मत्स्यादिभिः संवध्यते पाने भोजने च ।

## अथ कवलगण्डूषधारणमाह ।

यदाह शार्ङ्गधरः—

चतुर्व्विधः स्याद्गण्डूषः स्नैहिकः शमनस्तथा ।
शोधनो रोपणश्चैव कवलश्चापि तद्विधः ॥
स्निग्धोष्णैः स्नैहिको वाते स्वादुशीतैः प्रसादनः ।
पित्ते कट्वम्ललवणैरुष्णैः संशोधनः कफे ॥
कषायतिक्तमधुरैः कटूष्णै रोपणो व्रणे ।
चतुःप्रकारैर्गण्डूषः कवलश्चापि कीर्त्तितः ॥
असञ्चारी मुखे पूर्णे गण्डूषः कवलश्चरः ।
तत्र द्रवेण गण्डूषः कल्केन कवलः स्मृतः ।
दद्याद् द्रवेषु चूर्णञ्च गण्डूषे कोलमात्रया ।
कर्षप्रमाणः कल्कश्च कवले दीयते बुधैः ॥
धार्य्यन्ते पञ्चमाद्दर्षाद्गण्डूषकवलादयः ।
गण्डूषान् सुस्थितान् कुर्य्यात् स्विन्नभालगलाननः ।
मनुष्यस्त्रीन् तथा पञ्च सप्त वा दोषनाशनान् ॥
कफपूर्णास्यता यावच्छेदो दोषस्य वा भवेत् ।
नेत्रघ्राणस्रुतिर्यावत् तावद्गण्डूषधारणम् ॥
यस्यौषधस्य गण्डूषस्तस्यैव प्रतिसारणम् ।
कवलश्चापि तस्यैव ज्ञेयोऽत्र कुशलैर्नरैः ॥
हीनयोगात् कफोत्क्लेशो रसाज्ञानारुची तथा ।
अतियोगान् मुखे पाकः शोषस्तृष्णाक्लमो भवेत् ॥

व्याधेरपचयस्तुष्टिर्वैशद्यं वक्त्रलाघवम् ।
इन्द्रियाणां प्रसादश्च गण्डूषे शुद्धिलक्षणम् ॥
अन्यच्च—सुखं सञ्चार्य्यते या तु सा मात्रा कवले हिता ।
असञ्चार्य्या तु या मात्रा गण्डूषे सा प्रकीर्त्तिता ॥

## अथ रक्तमोक्षणविधिः ।

अतिस्रुतो हि मृत्युः स्याद्दारुणा वानिलामयाः ॥
प्रसन्नवर्णेन्द्रियमिन्द्रियार्थानिच्छन्तमव्याहतशक्तिवेगम् ।
सुखान्वितं पुष्टिबलोपपन्नं प्रसन्नरक्तं पुरुषं वदन्ति ॥
मर्म्महीने यथासन्न-प्रदेशे वेधयेच्छिराम् ।
नह्यूनषोड़शातीत-सप्तत्यर्व्वाक् स्रुतासृजाम् ॥
अस्निग्धास्वेदितात्यर्थ-स्वेदितानिलरोगिणाम् ।
गर्भिणी-सूतिकाजीर्ण-पित्तास्रश्वासकासिनाम् ॥
अतिसारोदरच्छर्द्दि-पाण्डु सर्व्वाङ्गशोथिनाम् (क) ।
स्नेहपीते प्रयुक्तेषु तथा पञ्चसु कर्म्मसु ॥
नायन्त्रितां शिरां विध्येन्न तिर्य्यङ्नाप्यनुत्थिताम् ।
नातिशीतोष्णवाताभ्रेष्वन्यत्रात्ययिकाद्गदात् ॥

## अथ घृततैलमूर्च्छाविधिः ।

### घृतमूर्च्छाविधिः ।

पथ्याधात्रीविभीतैर्जलधररजनीमातुलुङ्गद्रवैश्च ।
द्रव्यैरेतैः समस्तैः पलकपरिमितैर्मन्दमन्दाऽनलेन ॥
आज्यप्रस्थं विफेनं परिचपलगतं मूर्च्छयेद्वैद्यराजः ।
तस्मादामोपदोषं हरति च सकलं वीर्य्यवत् सौख्यदायि ।

### कटुतैलमूर्च्छाविधिः ।

वयःस्थारजनीमुस्त-विल्वदाड़िमकेशरैः ।

(क) अत्र शोषिणाम् इति पाठान्तरम् ।

कृष्णाजीरकह्रीवेर-नलिकैः सविभीतकैः ॥
एतैः समांशैः प्रस्थे च कर्षमात्रं प्रयोजयेत् ।
कटुतैलं पचेत् तेन आमदोषहरं परम् ॥

एरण्डतैलमूर्च्छाविधिः ।

विकसामुस्तकं धान्यं त्रिफला वैजयन्तिका ।
ह्रीवेरघनखर्ज्जूर-वटशुङ्गा-निशायुगम् ॥
नलिका भेषजं देयं केतकी च समं समम् ।
प्रस्थे देयं शाणमितं मूर्च्छने दधि काञ्जिकम् ॥

तिलतैलमूर्च्छाविधिः ।

कृत्वा तैलं कटाहे दृढ़तरविमले मन्दमन्दाऽनलैस्तत् ।
तैलं निष्फेनभावं गतमिह च यदा शैत्ययुक्तं तदैव ॥
मञ्जिष्ठारात्रिलोध्रैर्ज्जलधरनलिकैः सामलैः साक्षपथ्यैः ।
सूचीपुष्पांघ्रिनीरैरुपहितमथितैर्गन्धयोगं जहाति ॥
तैलस्येन्दुकलांशिकैकविकसाभागोऽपि मूर्च्छाविधौ ।
ये चान्ये त्रिफलापयोदरजनीह्रीवेरलोध्रान्विता ॥
सूचीपुष्पवटावरोहनलिकास्तस्याश्च पादांशिकाः ।
दुर्गन्धं विनिहन्ति तैलमरुणं सौरभ्यमाकुर्व्वते ॥

तैलमूर्च्छा ।

पत्रं पञ्चरसैर्युक्तं दधिलाक्षासमन्वितम् ।
मूर्च्छनं कारयेत् प्राज्ञो गन्धवर्णं जहाति च ॥
आम्रजम्बूकपित्थानां वीजपूरकविल्वयोः ।
गन्धकर्म्मणि सर्व्वत्र पत्राणि पञ्चपल्लवम् ॥

## अथ गन्धद्रव्यम् ।

एलाचन्दनकुङ्कुमाऽगुरुमुराकक्कोलमांसीशठी ।
श्रीवासच्छदग्रन्थिपर्णशशभृत्चौणिध्वजोशीरकम् ।

कस्तूरीनखपूतिशैलजशुभामेथीलवङ्गादिकम् ।
गन्धद्रव्यमिदं प्रदेयमखिलं श्रीविष्णुतैलादिषु ॥

## अपरं गन्धद्रव्यम् ।

देवदारुसरलागुरुत्वचं तेजपत्रवनकुष्ठकुङ्कुमम् ।
ग्रन्थिपर्णिशठिकोग्रगन्धकं मांसिकासुनखखोटि कुन्दुरु ॥
पूतिकं मधुरिकैलया नखी चन्दनं समपरं प्रियङ्गुकम् ।
मेथिकासदसुवास्यचम्पकं देवताड़नलिकासपृक्कया ॥
कक्कोलकं कल्कसमानि तैले देयानि सर्व्वाणि सुगन्धिकानि
अन्यान्यशेषाणि हितानि वैद्यैर्वातापहारीणि सुयोजितानि
ग्रन्थान्तरस्य—तैलाद् गन्धस्य पादांशं दद्यात् तच्छास्त्रविङ्भिषक्
केचिद् कल्कसमं मन्ये सर्व्वत्र गन्धकर्म्मणि ॥

## मतान्तरम् ।

कुष्ठञ्च नालुका पूतिरुशीरं श्वेतचन्दनम् ।
जटामांसी तेजपत्रं नखी मृगमदः फलम् ॥
कक्कोलं कुङ्कुमं चोचं लताकस्तुरिका वचा ।
सूक्ष्मैलाऽगुरु मुस्तञ्च कर्पूरं ग्रन्थिपर्णकम् ॥
श्रीवासः कुन्दुरुर्देवकुसुमं गन्धमातृका ।
सिह्लकं मिषिका मेथी भद्रमुस्तं शठी तथा ॥
जातीफलं शैलजञ्च देवदारु सजीरकम् ।
एतानि गन्धद्रव्याणि तैलपाकेषु युक्तितः ॥

इति चतुर्थः खण्डः ।

---

सम्पूर्णोऽयं ग्रन्थः ।